# ी नाथ

जीपुर)

हमारे परीक्षा की घड़ी आ
इन पाकिस्तानियों को कश्मीर
सवार है परन्तु कश्मीर के
म जीवन के अन्तिम क्षण
ड़ेगे।' शेर की तरह गरज
री, 'जवानों कश्मीर भारत
ग ही नहीं अपितु कश्मीर
है और भारत कश्मीर और
पर आंख उठाने वालों की
निकाल दी जाएगी।'
मोर्चा बन गया।
बिगुल बज उठा।
'फायर...' हरी की गरज
न वातावरण में गूंज उठी।
थाये धांय। हथ गोले गिरने
शत्रुओं पर।
ठायें-ठायें। गरज ने लगी
हैं।
हर हर महादेव। मशीन गन मन-
छेदने लगी शत्रुओं को।
आहा आह आह। के
ओं के कराहसे वातावरण और
नक हो उठा।
'जवानों आगे बढ़ो!' भारत
का सच्चा प्रहरी दहाड़ उठा।
सैनिक लगातार पांच दिन लड़ते
।
भारतीय कुमुक के आगमन की
ा पा हरी खिल उठा पर तभी।

ठायें। पाकिस्तानी मुंगनी की बन्दूक चलने की आवाज हुयी।

'आह!' कराह उठा हरी।

गोली उस के जांघ में लगी।

धप। गिर गया हरी।

घायल शेर बड़ा भयानक होता है। हरी फुफकार उठा।

तब पाकिस्तानी मरने लगे कुत्तों की मौत।

पाकिस्तानी को भूनने लगा हरी।

पाकिस्तानी सेना चिल्लाने लगी रोने लगी पर उनका स्वर गोलियों के गड़गड़ाहट में खो जाता।

पाकिस्तानियों को कोई वर्षों पर उचित दण्ड मिला था आज।

भारतीय कुमक पहुंचने के कुछ क्षण पूर्व शरीर से रक्त निकल जाने के कारण हरी अचेत हो गया।

भारतीय कुमक ने शीघ्र ही हरी को युद्धकी भूमि से निकाल कर विशेष वायुयान द्वारा दिल्ली अस्पताल भेज दिया।

डाक्टरों ने जी जान लगा दिया हरी के जीवन के लिए पर अन्तमें उन्हें विवश होकर हरी के जीवन रक्षा के लिए जांघ काट देना पड़ा। हरी बीस दिन बाद चेतन अवस्था में आया। उसे अपने जांघ के कटने का दुःख न था। दुख था तो केवल इसका कि अब वह फिर शत्रुओं से बदला लेने न जा सकेगा।

तीन माह तक हरी अस्पताल में पड़ा रहा।

इस बीच कई ऐतिहासिक घटनाएं हुई।

हरी ने सुना, भारत युद्ध में जीत गया।

हरी खुशीसे फूला न समाया। पर राजनीति में भारत हार गया।

हरी कराह उठा यह सुनकर। पंजाब सूबा के लिए दंगा हो गया।

हरी कड़प गया उसको ऐसा लगा कि इसकी दोनों जांघे कट गई।

सोचा हरी ने दयनीय है वह देश जहां के लोग अपने स्वार्थ के लिए देश को खण्ड खण्ड करते हैं और हर एक भाग को देश कहते हैं, एक राष्ट्र कहते हैं।

तीन माह बाद हरी अपने घर लौटा। अब वह काठ के नकली पैर पर खट खट कर चलता था।

जिस भी स्टेशन पर गाड़ी खड़ी होती हरी का स्वागत होता।

काशी के विशाल-स्टेशन पर गाड़ी के प्रवेश करते ही हरी का सर श्रद्धा से झुक गया।

तीन घण्टे बाद हरी की गाड़ी गाजीपुर पहुंची जहां उसे उतरना था।

गाजीपुर जनपद उमड़ पड़ा अपने वीर का स्वागत करने को।

हरी ने देखा। माँ-पिता जी के बगल में ही कृपाल सिंह भी है।

हरी बच्चों की तरह माँ के पांव से लिपट गया। माँ ने बहते आँसू अपने लाल को इस मिलन पर भेंट किया।

माँ बेटा के मिलने पर सभी की आँखें भर आई।

रामसि
विशाल वक्ष
कृपाल
हृदय लगा
हृदय का टु
कृपाल
हरी ने चन्द
चन्दा
पहले ओठ
हरी के
कर चन्दा
लें।
तभी
उभरा 'हरी
की आस
हरी,
रहा था।
चन्द
तो क्या
की भाँति
चन्दा का
पर
केवल
उफ
'हरी
पुकारा
'हाँ
हरी माँ
में आ
'मैं
तू है कि
गया है
हर
लिए
'
दूध पी
तुमने
माँ

* ओ: *

संस्कृतसाहित्यसम्मेलनस्य

मासिकं मुखपत्रम्

# संस्कृतरत्नाकरः

चूडापीडकपालसंकुलगलन्मन्दाकिनीवारयो-
विद्युत्प्रायललाटलोचनशिखिज्वालाविमिश्रत्विषः ॥
पान्तु त्वामकठोरकेतकशिखासंदिग्धमुग्धेन्दवो-
भूतेशस्य भुजङ्गवल्लिवलयस्रङ्नद्धजूटा जटाः ॥१॥


प्रधानसम्पादकः—

सर्वतन्त्रस्वतन्त्रः पं० महादेवपाण्डेयः कवितार्किकचक्रवर्त्ती

सहसम्पादकः—

आचार्यरघुराजमिश्रः एम्० ए०

व्यवस्थापकः—

आचार्यः पं० नागेशोपाध्यायः एम०ए०

श्रीकाशीविश्वनाथपञ्चाङ्गाध्यक्षः ।

काशी, शरत्पूर्णा, १५,२००८ वि०

षोडशवर्षस्य पञ्चमोऽङ्कः

१ प्रतेः मूल्यम् ।≡)

षाण्मासिकम् २॥)

वार्षिकम् ५)

# विषय-सूची



---

# लेखकानां कृते नियमाः

सम्मेलनमिदं तन्मुखपत्रभूतं "संस्कृतरत्नाकरः" पत्रञ्च विशुद्धं साहितीयम्। अत्र हि निर्दिष्टविषयेषु लेखा अपेक्ष्यन्ते—

(१) परिचयात्मकाः—(क) ग्रन्थपरिचयात्मकाः (ख) पदार्थपरिचयात्मकाः (ग) ग्रन्थकारपरिचयात्मका वा

(२) आलोचनात्मकाः—(क) सामाजिकाः—संघटनप्रोत्साहनकराः गुणदोषविवेचनपराः

(ख) शिक्षासम्बन्धिनः (ग) मनोविनोदिन्यः कथाः

(घ) दार्शनिकाः, साहितीयाः, ज्योतिर्विज्ञानसम्बन्धिनः, आयुर्विज्ञानादिसम्बन्धिप्रभृतयः

(३) विद्वच्चरितम्—अप्रतिमप्रतिभाशालिनां पूर्वेषां वर्तमानानां वा विदुषां जीवनवृत्तम्

(४) लेखकमहोदयैः स्वकीयो लेखः पत्रस्य एकस्मिन्नेव भागे सुस्पष्टाक्षरैर्विलिख्य प्रेषणीयः।

(५) लेखे आवश्यकं परिवर्तनं संक्षेपणञ्च कर्तुं सम्पादकः प्रभवेत्

(६) अप्रकाशिताः लेखाः प्रापणव्यये प्राप्त एव परावर्त्येरन्।

(७) अतिविस्तृताः विवादपराश्च निबन्धाः नास्मिन्पत्रे स्थानं लभेरन्।

॥ श्रीः ॥

सरस्वती श्रुतिमहती महीयताम्

# संस्कृतरत्नाकरः

यावन्मूर्ध्नि हिमांशुकन्दलभृति स्त्रवाहिनी धूर्जटे-
र्यावद् वक्षसि कौस्तुभस्तबकिते लक्ष्मीर्मुरद्वेषिणः।
यावच्चित्तभुवस्त्रिलोकविजयप्रौढं धनुः कौसुमं
भूयात्तावदियं कृतिः कृतधियां कर्णावतंसोत्पलम् ॥

प्रधानसम्पादकः—
पण्डितश्रीमहादेवपाण्डेयः

सहसम्पादकः—
आचार्यरघुराजमिश्रः, एम० ए०

वर्षम् १६ } काशी, शरत्पूर्णा, १५, २००८ वि० { संख्या ५


## सुरभारती समुद्धाराय क्रान्तिः क्रियताम्!

[ ले० प० श्रीगणेशरामशर्मा, अध्यापकः श्रीराजेन्द्र-इण्टर-कॉलिज, झालावाड़ ]

भौतिकविज्ञानमयेऽस्मिन्वर्तमाने प्रजातन्त्रशासनैकशरणेऽणुशक्तिप्रधाने यन्त्रयुगे भारतीयार्यसभ्यताया आर्षसंस्कृतेर्वर्णाश्रम सनातनधर्मस्य तदुपकारकसंस्कृतभाषा साहित्यस्य तदाश्रयि शिष्ट विशिष्टमानवसमाजस्य च कथमभ्युदयः सुसाध्यः स्यात्साम्प्रतमिति गभीरं सुनिपुणं च विचार्यमाणे कापि नवीनैवाद्भुताभूतपूर्वा दुर्धर्षा क्रान्तिर्नितरामत्यावश्यकीति प्रतिभाति नः!

यदा वयं दिने-दिने जायमानां संस्कृतगिरां तत्साहित्यसेविनां चावनतिं हीनतामपकर्षञ्चानुचिन्तयामस्तदा सर्वोपायपरिभ्रष्टां विडम्बनामयीं वर्तमानां परिस्थितिं समवेक्ष्य समालोच्य च द्रुतमस्माकमत्र तद्विरोधितत्त्वेभ्यः कोपदहनज्वालाजटालमन्तर्यथादन्दह्यमानमपि स्वाभिमानोन्नतं स्वाधीनं चेतः!! राजनीतिगतशासनतन्त्रे, सामाजिकसमानाधिकारे, लोक जीवने यत्र तत्र सर्वत्र समुपेक्ष्यमाणां संस्कृतां सरस्वतीं मातरं, तदुपासकविदुषश्च तथाविधानगतिकान् दर्शं दर्शं भीष्मद्रोणकर्णार्जुनादिभ्योऽप्यधिकं पराभवासहिष्णु नः स्वात्मतेजो धर्षितुमिच्छति शात्रवान्!!! दुर्वासोभार्गवयोरिव प्रतिशोधविह्वलं हिंसाहिंसातत्त्व-सिद्धान्त विचार विमर्शनिरपेक्षं प्रसह्य स्वपौरुषबलसामर्थ्यावलम्बनोत्साहैकसस्पृहं धैर्यधुरीणं

नो मनः समुत्कण्ठते तामिमां सुरभारतीं समुद्धर्तुं सर्वतन्त्रस्वतन्त्र महत्त्वाकांक्षाभ्यः !!! स्फुरन्ति चास्माकमन्तर्हृदीमे क्रान्त्युपनिषद्हृदयसर्वस्वा मूलमन्त्राः—

"बलमुपास्व !"
"नायमात्मा बलहीनेन लभ्यः !"
"सर्वं बलवतां पथ्यम् !"
"उद्धरेदात्मनात्मानं नात्मानमवसादयेत् !"
"नये च शौर्ये च वसन्ति सम्पदः !"

यद्यप्यद्यत्वे न केवलं सर्वसाधारणा भारतीया एव अपितु विश्वस्मिन् सर्वतो वसन्तः कोटिशो मानवाः संस्कृतभाषायास्तत्साहित्यस्य च महत्तां, गौरवं सर्वाङ्गपरिपूर्णत्वं चापि स्वीकुर्वते। स्वदेशेऽप्यस्माकं राजनीतिज्ञा नेतारः समाजसुधारका धर्माचार्याश्च संस्कृतां गिरं समुन्नेतुं वाञ्छन्ति। विश्वविद्यालयस्नातकाः शिक्षाशास्त्रिणोऽप्यथ संस्कृतभाषामाहात्म्ये सुतरां प्रथन्ते। हिन्दीभाषाया राष्ट्रभाषात्वाङ्गीकारे संस्कृतमेव पृष्ठभूरिति मन्वाना हिन्दी-पण्डितमहाशयाश्च निर्विवादं श्रद्दधते। संस्कृतभाषा भारतीयजीवने स्वसभ्यतासंस्कृति-धर्माचारविचारपरम्परानुकूला, इत्यपि सर्वे समर्थयन्ते। भाषाविज्ञानतत्वविदो मनीषिणो ह्यन्ता-राष्ट्रियरङ्गमञ्चोपयोगि संस्कृतस्य किमप्यपरं गौरवं सार्वभौमं योग्यतां च स्वीकुर्वते। संसारेऽस्मिन् सर्ववाङ्मयजननी सर्वाभ्योऽप्यथ भाषाभ्योऽतिप्राचीनतमेयं संस्कृतगवी सर्वविधसाहित्याङ्ग परिपुष्टा व्याकरणविज्ञाननियमजुष्टेति च मन्यते। अस्मद्राष्ट्रस्येतिवृत्तं सर्वं संस्कृताक्षरसम्बद्धमार्यसभ्यतामद्यावधि संरक्षतीति परश्शतेषु गुणगौरवेष्वस्या जोघुष्य-माणेष्वपि साम्प्रतमत्र सुरभारत्याः प्रचारे प्रचलने गतिरोध एव दरीदृश्यते। तत्र किं कारण-मिति जिज्ञासायां सरस्वतीपुत्राणामस्माकं संस्कृतपण्डितानां निर्वीर्यत्वमकर्मण्यतेत्येव मुख्यं निदानम्! तदत्र कापि नवीना क्रान्तिरेव योग्या चिकित्सा।

यदि वयं सर्वे सङ्घबद्धाः सुसंघटिताः सबलाः सक्षमाश्च जायेमहि तदा सिंहविक्रमेष्व-स्मास्वक्षतेषु कस्य मानवाधमस्य पामरस्यैतावद्दुस्साहसं यो हि विश्वविश्रुतकीर्तिं दिग्दिगन्तविजय-चक्रवर्तिनीं सदाचारशीलौदार्य्यसौन्दर्यादिभिर्गुणैर्भास्वरात्मतेजःप्रभां भुवनमोहिनीं संस्कृतां भारतीं मनागपि विमनायितुं दुश्चेष्टेत ? नैतत्परोक्षमस्माकं ज्ञानविज्ञानपरिष्कृतं शिष्टसभ्य-मस्तिष्कानां हस्तामलकवन्निखिलमपि विषयप्रपञ्चं प्रत्यक्षं पश्यतां यदिमे केचिद्विदेशीयभाषा-साहित्योच्छिष्टास्वाददासा विस्मृतस्वसभ्यतासंस्कृतिगौरवाः स्वयं सिंहशावा अपिआत्मानं मोहवशाच्छृगालान् मन्वानाः पथिभ्रष्टाः कुलद्रोहिणो भारतीया एव बन्धवोऽस्माकं पूज्यतमां जननीं सुरसरस्वतीमवमाननेन कदर्थयन्ति विडम्बयन्ति चेति। वयं सुस्पष्टं निर्भ्रान्तं चेदमित्थं जानीमहे यद्भारतभूरियं पाश्चात्यसभ्यताचारविचारानुसरणैकप्रवृत्तैः स्वकुपुत्रैरेव कैश्चित्परिभूयमाना विमनायते। अतः स्वमातरं संस्कृतगिरं परिरक्षितुमुन्नेतुं चैतां घोरा क्रान्तिः क्रियताम्।

जानन्त्येव तत्रभवन्तो भवन्तो भव्याः विपश्चितो यदितिवृत्तानुशीलनेन स्फुटमेतत्तथ्य-मस्माकं पुरतो यद्धि स्वस्थसिद्धान्तभावनोद्रेकजन्या निर्दोषापि कापि क्रान्तिस्तावन्नो क्षण-मात्र एव परिव्याप्तुं स्वोद्देश्यफलानि फलित्वा पर्यवसितुं सक्षमा भवति। गतशताब्द्यां

कृतसूत्रपाता भारतीयस्वातन्त्र्ययुद्धक्रान्तिश्चिराद्धर्पशतानन्तरमिदानीं स्वराज्यसिद्धिं जगाम। तत्र च संख्यावन्तो देशभक्ताः स्वातन्त्र्ययुद्धक्रान्तिरणरङ्गवेद्यां स्वात्मनो बलिमर्पयामासुः, नानाविधा दारुणा यन्त्रणाश्च शत्रुकृताः समूकीभावं सेहिरे, तदैव ते स्वलक्ष्यं भेत्तुं शेकुः। एवमेव धर्मार्थक्रान्तिः साहित्योद्धारक्रान्तिः सभ्यतोन्नतिक्रान्तिरन्या वा या काप्यभीष्टा क्रान्तिः क्रियमाणा कोटिशो वीराणां स्वसुखनिर्व्यपेक्षमात्मत्यागपूर्वकं बलिदानमपेक्षते। अतः संस्कृतोद्धारमिच्छद्भिरस्माभिरपि नैतद्विस्मर्तव्यं यत्त्यागं विनोत्साहं विना धैर्यं बलं साहसं च विना न काऽपि क्रान्तिः सफलतामावहतीति। यद्यस्ति चेदस्माकं मनसि सत्यसङ्कल्पो भारतीयां भारतीं समुद्धर्तुं तदारभ्यतां काप्यभिनवा क्रान्तिः सविवेकं या हि परिणामे सफला विजयिनी च निष्पद्येत। नो चेत् 'अनारम्भो हि कार्यस्य प्रथमं बुद्धिलक्षणम्' इति नीत्या तूष्णीमालम्ब्य सुखं स्थीयताम्।

यदि च प्रोच्येत किंरूपा, किंविधा, किंलक्षणासौ क्रान्तिर्भवितुमर्हति, तदावधीयताम्:—

सर्वादौ संस्कृतपण्डितानामस्माकं शिरस्येव महानुत्तरदायित्वभारोऽस्ति संस्कृतगिरां गौरवरक्षणस्य। एतदस्माकं प्राथमिकमनवश्यकर्तव्यताकं कर्तव्यं यद्वयं स्वार्थत्यागपूर्वकं विषयेऽत्र योग्यमनुपायानवलम्बेमहि। यथा हिन्दीसाहित्योद्धारे भारतेन्दुकालादिदानीं यावत् हिन्दीविद्वांसः सामयिकसाहित्यसर्गे तत्प्रचारे च यादृक्पुरुषार्थं प्रादर्शयन्, सार्वजनीनमभिनवं लोकोऽपयोगि साहित्यं चासृजंस्तथैव सर्वाङ्गीणं रुचिररुचिरं मर्मस्पृग्देशकालोचितं गद्यपद्यात्मकं जनजागर्त्युद्बोधकं क्रान्तिकरं साहित्यं वयं सृजेम तत्प्रचाराय च निपुणं प्रयतेमहि। सभाविजेतारो वयं संस्कृतपण्डिता यथा संसत्सु शास्त्रार्थप्रसङ्गेषु प्रखरवैखरीवैदग्ध्यनैपुणीमत्यद्भुतं प्रतिभाचमत्कारं परिष्कारपाण्डित्यं वा प्रकटयामो न तथा साहित्यसेवाहेवाकितया स्वान्तः सुखाय लेखनीलीलास्यलीलया ललितलेखमालाग्रन्थनैः साहित्यप्रचारार्थं किमपि कुर्मः। परिणामतो लोकहृदये संस्कृतगिरां गौरवमुद्रामङ्कितुं न प्रभवामः। संस्कृतविदुषां व्यक्तित्वप्रभावो यावल्लापणे स्वतेजस्वितां सत्त्वसम्पन्नतां शास्त्रालोचनगूढविचारविमर्शप्रातिनिध्यं प्रकटयति न तावल्लोकरुचिं परिमार्ष्टुं राजनीतिगताखिललोकप्रवृत्तीनां दिग्दर्शनाय नेतृत्वं कर्तुं प्रभवति। प्रचारशैथिल्यात् सर्वसाधारणजना उत्तमस्यापि संस्कृतसाहित्यस्यानभिज्ञास्तिष्ठन्ति, परिचयलवलेशं समनुरुन्धाना अपि केचिदुपेक्षन्ते। अतः संस्कृतप्रचारेऽस्माभिरध्यवसायोत्साहपरैस्सतर्कैर्जागरूकैः प्रयतितव्यम्। युगेऽस्मिन् प्रचारस्य सर्वश्रेष्ठं माध्यमं सामयिक पत्रपत्रिकाः सन्तीति जानीमो वयम्। परमत्र सखेदमेतद्वक्तुं विवशाःस्मो यद्धि संस्कृतपण्डितेषु नाद्यावधि पत्रकारिता समुन्मेषं भजति, तद्विकासस्य तु कथैव का? हिन्दीपत्राणीव संस्कृते कियन्ति चोत्तमानि मासिकपाक्षिकसाप्ताहिकदैनिकपत्राणि? सन्त्यपि कानिचिद्विरलविरलानि तानि सर्वाणि प्रायः क्षीणकलेवराणि चित्रशून्यान्यपुष्टपत्राण्यल्पायूंषि महता कष्टेन सम्पादितानि संरक्षकाभिभावकग्राहकवैरल्याद्धनाभावाच्च ससन्देहास्तित्वानि म्रियमाणानीव दृश्यन्ते। कारणमेतदेवास्ति यत्संस्कृतपण्डिताः सुरभारतीसेवायामपेक्षातो न्यूनमध्यवसायं विदधति। केवलमाजीविकावृत्तिसमुपार्जनमेव हि ते पुरुषार्थस्य परांकाष्ठां मन्वते। न तत्पर्याप्तमेतत्। एतद्युगं लोहलेखनीयुगम्। समयेऽस्मिन्साहित्याभ्युन्नतये सिद्धासनानां निर्भीकाणां सर्वतन्त्रस्वतन्त्राणाम्महामहिममहीयसां बहुश्रुतानां राज-

नीतिकौशलपटूनां सम्पादकधुरीणाचार्यप्रवराणां लोहलेखनीचमत्कारद्वारैव सुमहान् प्रचारो भवेत्साधीयान्। प्रतिभावतां लेखनकलाकुशलानां सहयोगामन्त्रणमथ लेखकानामत्रातीवावश्यकम्।

नैतावतैव कृतकार्यता सम्भाव्यते परं च संस्कृत भाषायाः सार्वभौमप्रचाराय शिक्षासंस्थासु सर्वासु तत्प्रचलनमप्यत्यावश्यकम्। प्राथमिकमाध्यमिक-शिक्षाशालोपयोगिसाहित्यसर्गस्य महती ह्यावश्यकता विद्यते। विश्वविद्यालयोचशिक्षादीक्षासम्पादनक्षमसाहित्यसृष्टिर्नूनैवाविष्कर्तुं युज्यते। यथांग्ल हिन्दी वंगगुर्जरीमहाराष्ट्रिय-प्रभृति प्रान्तीयभाषाणामक्षरारम्भकर्तृणां बालानां कृते सचित्राः सुचिक्कणपृष्ठमुद्रिता वर्णमालापुस्तिका नवनवा नयनाभिरामाः प्रतिदिनं प्रकाश्यमाना दरीदृश्यन्ते न तथा संस्कृताक्षरज्ञान प्रारिप्सूनां कृते सुलभा इदानीम्। एवमग्रेऽपि प्रथमद्वितीयादिश्रेणीषु पाठ्यपुस्तकानां बालमनोविज्ञानमनुशील्य-लिखितानां बालमस्तिष्कस्य क्रमविकासे साधनीभूतानां पुस्तकमालानां संस्कृते क्वोपलब्धिः? इतिहास–भूगोलगणित–स्वास्थ्यविज्ञान–भूगर्भशास्त्रमनोविज्ञान–भौतिकविज्ञानरसायनशास्त्रौषधिविज्ञानेत्यादिनानाविषयाणां समयोपयोगिपरीक्षाशिक्षासाधनीभूतानां संस्कृते प्रकाशनं नावलोक्यते। अत्रापि योजनापूर्वकं विद्वद्भिः प्रवर्तितव्यम्। इत्थं कृते सति क्रान्ते रूपरेखा किंचिद्विदिता स्यात्।

तदनु संस्कृताश्रयि-जीवनानां मठाधीशानां मोहान्तानां सम्प्रदायाचार्याणां कर्मकाण्डदक्षाणां याज्ञिकानां ज्योतिर्विदां वैद्यानां यजमानवृत्तिपरेषां पुरोधसां शिरसि समापतति भारो महान्सुरसरस्वत्याः समुद्धारहेतोः क्रान्तेः। ये नु खल्वधीत्य संस्कृतभाषां तद्वारैव स्वोदरदरीपूरणं कुर्वन्तो जीवन्ति तेषामथेदमवश्यकर्तव्यताकमुत्तरदायित्वं वर्तते संस्कृतां वाणीं समुन्नेतुम्? ततो ह्यध्यापकानां विद्यार्थिनां च मस्तके महदुत्तरदायित्वमत्रविषये क्रान्तिबीजाङ्कुरं परिपोषितुम्। तदनन्तरं सभाजाग्रगण्यानां मान्यानां प्रतिष्ठितपुरुषाणां, धनिकानां, संस्थासञ्चालकानां पर्यन्ते सर्वसाधारणानां संस्कृतोद्धारस्य कर्तव्यं जायते। राजनीतिसत्ताधिरूढास्तावन्नैव सहयोगं करिष्यन्ति यावदियं क्रान्तिर्नूनमेव विकाशोन्मुखी जायेत।

तस्मादेवेदमस्माभिरुच्यते क्रियतां दुर्धर्षा क्रान्तिः। आहिमालयात्सेतुबन्धं प्रतिनगरं, प्रतिग्रामं, प्रतिगृहं, किं बहुना जनं जनं प्रति क्रियतां क्रान्तिः काप्यभिनवा! प्रवर्तन्तामान्दोलनानि! जायन्तां क्रान्तिपरिषदः! विद्वद्भिः पण्डितैः प्राध्यापकैः शिक्षकैश्छात्रैः पुरोहितैः धमाचार्यैं र्मोहान्तैः सम्पादकै अधिकारिवर्गैः प्रचारकैः सर्वसाधारणैश्च सुरभारतीसमुद्धाराय काप्यभूतपूर्वाभिनवा दुर्धर्षा महती तेजोमयी प्रोज्ज्वला क्रान्तिः क्रियतां सर्वतोदिशीति शम्।

## श्री महारावल-रजतजयन्त्या-अभिनन्दन ग्रन्थः

[ सम्पादकः—प० गणेशराम शर्मा शास्त्री, राजेन्द्र इण्टर कालेज, झालावाड़ ]

अयं ग्रन्थः २००३ विक्रमीयवत्सरे प्रजावत्सलानां **'डूँगरपुर नरेश महोदयानां महाराजाधिराज श्री सर लक्ष्मण सिंह जी' महाशयानां रजत जयन्ती शुभ महोत्सवे** श्रीमहाराज करकमलयोः समर्पितः अभिनन्दनग्रन्थ रूपः संस्कृत, हिन्दी, इङ्ग्लिश, गुजराती भाषामयः प्रायः सार्धषट्शतपृष्ठात्मको मनोहरकलेवरः। एतत्सुचारु-सम्पादनश्रेयोभागिनः प्रख्या-

तद्यशस्काः साहित्यसेविनो, मनीषिमूर्धन्याः, श्री प० गणेशराम शास्त्रि महाभागाः। ग्रन्थस्यास्य बाह्यदर्शनेनैव सम्पादक महोदयानां दाक्षिण्यस्य, गम्भीर पाण्डित्यस्य, कलाप्रियतायाः सम्पादन कलापटुतायाश्च सुस्पष्टं परिचयो भवति।

अभिनन्दन-ग्रन्थेषु प्रायः अभिनेतव्य महाजनमेव केन्द्रीकृत्य सर्वे विषयाः प्रतिपादिता भवन्ति। परमेतस्य ग्रन्थस्य इदं हि वैशिष्ट्यन्नाम यत् सम्पूर्णग्रन्थस्य अष्टमांश एव अभिनन्दनीय जनमभिनन्दति, तत्रापि केवलं सूत्रधार रूपेण महाराजानां वर्णनम्, तानाश्रित्य लोकोपकारिणः सामाजिकादयो विषया एव प्रतिपादिताः।

अयं ग्रन्थःसप्तधा विभक्तः।

१. साहित्यखण्डः
२. दार्शनिकाध्यात्मिक धार्मिक खण्डः
३. इतिहास पुरातत्व खण्डः
४. वैज्ञानिक खण्डः
५. सामाजिक खण्डः
६. नरेश सम्बन्धी खण्डः
७. राजनीतिक खण्डः

एतेषु सर्वेष्वपि खण्डेषु स्वस्वविषये लब्धप्रतिष्ठाः भारतव्यापियशस्काः स्वनाम धन्याः साहित्यनिर्मातारः साहितीय लेखकाः प्रबन्धान् रचितवन्तः।

अत्र हि प्रत्येकं खण्डः स्वस्मिन् पूर्णः, यथाहि अधिकारिणो निबन्धारः

सामर्थ्य सम्पन्नाः सम्पादन पटवश्च सम्पादकाः, एवम् प्रत्येकं निबन्धः तत्तद्विषयक ज्ञान सम्पादक सामग्री बहुलः। यथाहि अस्य खण्ड विभक्तयैव प्रतीयते ग्रन्थोऽयं भारतीयनिखिल-विचार धारा प्रतिनिधिरूपः। अस्योदारत्वव्यापकते च विविधभाषास्वीकारेणैव प्रस्फुटे। श्रीमहारावल महोदयानामभिनन्दनमिषेण भारतीय-साहित्यकृते ग्रन्थोऽयं महत्वपूर्णो महनीयश्च रत्नरूपः।

**प्रत्येकं पुस्तकालये संरक्षणीयः, प्रत्येकं विद्वद्भिः पठनीयश्च।**

लघुकथा++++

# परमात्मनि सुदृढो विश्वासः

[ लेखकः—स्वामी लक्ष्मणशास्त्री, संस्कृतविद्यालयाध्यक्षः। नागौर ( मारवार )

पुरा बभूव कोऽपि द्विजः। स गृहस्थो यथा लाभ सन्तुष्टश्चाभूत्। स साधारणविद्वत्तया श्रीरामायण श्रीमद्भागवतादि पुराणानां कथाः श्रावयित्वा श्रोतृजनैरूपनीतेन यत् किञ्चनोपहारादिना स्वस्य स्वकुटुम्बस्य च वृत्तिं निरवर्त्तयत्।

अन्येद्यू रहस्युपविष्टस्य तस्य द्विजस्य चेतस्यकस्माच्चिन्ता समुत्पन्ना भूत्। किं कुर्वे! धनिनो मादृशानां साधारण विदुषां कथाश्रवणादौ नाद्रद्धते। साधारणजना एव मदीयाः कथाः शृण्वन्ति। ते यथाशक्ति कथासु कथासमाप्तौ च यथोचितमुपहारमर्पयन्त्येव। किन्तु तेन दैनन्दिनव्ययकार्यं निर्वाहयितुं दुःशकम्। एवन्त्वहमामरणं प्रयस्यन्नपि पुत्राणां

पुत्रीणाञ्चावश्यविधेयेषु विवाहादिकार्येषु व्ययोपयोगिद्रव्यं न कथञ्चनाप्युपार्जयितुं शक्ष्यामि। इति विचिन्तयतस्तस्य कतिचन दिवसा व्यतीताः।

अपरेद्युरुषसि स्तोत्रपाठं कुर्वतस्तस्य 'भोजनाच्छादने चिन्ता वृथा कुर्वन्ति वैष्णवाः। योऽसौ विश्वम्भरो देवः सभक्तान् किमुपेक्षते, इत्येतत्पद्यस्मा शयश्चेतसि विचारपथमारूढः, यज्जनः प्राकृतजनस्यापि सेवां कुर्वाणः सेवानुरूपं यत् किञ्चित्फलमवश्यं लभते। जगत्पतेर्लक्ष्मीपतेश्च कैङ्कर्यं कुर्वन् जनो न किमपि लभते, इदं सर्वथा न घटते। जगदीश्वरस्य कैङ्कर्यं कुर्वाणो जनः इतरजनस्य सेवां विदधान इव तुच्छं विनश्वरं च फलं नाप्नोति किन्तु स्वल्पेनैव कालेन मनोऽभिलषितमनश्वरं च फलमाप्तुं शक्नोति इति निश्चप्रचमेव। परमेश्वरे श्रद्धाभावादेव वयं मौढ्येनेतस्ततो भ्रमामः।

अहो! कामक्रोधलोभमोहादिभिर्व्याकुलीकृतात्मासौ जनः जगदीश्वरं लक्ष्मीपतिं सर्वान्तर्यामिणं दीनैकबन्धुं चापहाय धनदुर्मदान्धान् मितम्पचांश्च प्राकतजनान् कठिनतर सेवाभिः प्रसाद्य तेभ्यो द्रव्यं लिप्समानो भिक्षुं याचमानो भिक्षुः न किमपि तस्माद्विशेषतो लब्धुं पारयतीत्याभाणकं सर्वथा चरितार्थी करोति। श्रीपतिं विना कोऽपरो मदीयमिमं महान्तं मनोऽभिलाषं सफलयितुम्प्रभवति?

आयत्यामहं निर्मनुजेऽरण्ये किमपि श्रीभगवन्मन्दिरमन्विष्य तत्रस्थितं श्रीपतिमेव केवलं प्रत्यहं कथाः श्रावयिष्ये। स एव ममात्युचतं मनोऽभिलाषं नियतं सफलं विधास्यते। इति दृढं निश्चित्य स भूमिदेवः स्वनगराद् बहिःस्थितं किमपि निर्जनस्थानस्थं श्रीराममन्दिरं दृष्ट्वा तत्रैव श्रीवाल्मीकिमहर्षि प्रणीतस्य रामायणस्य कथाः श्रावयितुम्प्रारेभे। यत्र प्रतिमारूपेण स्थितं श्रीरामं तद्भक्तं श्रीहनुमन्तं च विना न कोऽप्यपरः श्रोतासीत्। प्रत्यहं प्रातरारभ्य मध्याह्नं यावत् श्रीपतये कथाः श्रावयित्वा सहि द्विजः स्वगृहं प्रयातिस्म। मध्याह्नात्सायं कालपर्य्यन्तं भिक्षयान्यया वृत्या च यत्किञ्चिल्लभते तेन गृहकृत्यं निर्वहतिस्म।

एवं कुर्वतस्तस्य द्वादश मासाः व्यतीताः कथासमाप्त्यवसरः प्रत्यासन्नएव। कथासमाप्तौ केवलं पञ्चषाणि दिनान्य वशिष्टानि। एतत्समयपर्य्यन्तं न किमपि फलं लब्धं द्विजेन। श्रीलक्ष्मीपतेर्दीनैकबन्धोश्च श्रीहरेः सेवा न कथञ्चनापि निष्फला भवितुमर्हतीति शास्त्रकृद्भिरूर्ध्वबाहूभूय तत्र तत्र जोघुष्यतेतमाम्।

अस्तु! एकः कोऽपि श्रावकजातीयोऽतिधनी श्रेष्ठिवर्यो निजं किञ्चनावश्यक कार्यं कर्त्तुं तस्य मन्दिरस्य निकटं प्रत्यहमेवा गच्छतिस्म। कथासमाप्तेः पञ्चषेषु दिवसेष्व वशिष्टे वेकदा सायङ्काले स श्रेष्ठी स्वमावश्यक कार्यं विधाय मन्दिरस्य द्वारप्रदेशे स्थितोऽभूत्। तदैव मन्दिराभ्यन्तरादकस्मादेवातिगम्भीरा वागश्रूयत। श्रीरामः स्वभक्तं हनूमन्तं सम्बोध्य वदतिस्म। हनुमन्! तवविदितमस्ति, यदस्य द्विजस्य कथा समाप्त प्रायास्ति, कथासमाप्तौ कथाया उपरि प्रदेयहाराय त्वयावश्यम्प्रयत्नो विधेयः। अयं द्विजः केवलं मदेकाश्रयः। माम्प्राप्य जनः पुनरन्यतो याचितुं नार्हति। अतोऽस्य द्विजस्य मनोऽभिलापस्त्वयावश्यम्परिपूरणीयः। हनूमान् सविनयं प्रतिवदतिस्म। विजयोस्तु स्वामिनाम्! यथादिश्यते तथैव निर्विकल्पं विधास्यतेऽनुचरेण मया। कथासमाप्तौ सुवर्णमुद्राणामीदृशी वृष्टिर्मया विधास्यते यादृशी न केनापि दृष्टचरी श्रुतचरी वा। मन्दिरस्य द्वारदेशे स्थितेन श्रेष्ठिना सा स्फुटा वाक् सुष्ठु श्रुता।

श्रेष्ठिना मन्दिरान्तर्गत्वा दृष्टं न तत्र कोऽपि विद्यते। तदा श्रेष्ठिना स्वमनस्यालोचितम्, न कोऽपि जनोऽत्रास्ति। मन्दिरस्य देवताभिरियं वाक् खलु गदिता। अतो द्विजस्य कथा-समाप्तिदिवसेऽवश्यमेव सुवर्णमुद्राणां वृष्टिर्भविष्यति। दैवीवाङ्मृषा कदापि भवितुं नार्हति। अतोऽद्यैव द्विजस्यान्तिकं गत्वा येनकेनाप्युपायेन तं ब्राह्मणं सुवर्णमुद्राभिः सन्तोष्य तत्कथो-पहाररूपं सर्वं द्रव्यजातमहमादातुम्प्रयतिष्ये, येनाहं प्रयासं विनैवापरिमितस्य द्रव्यस्येश्वरो भविष्यामि। भाग्येनैवैतादृशोऽवसरो लभ्यते।

इति विचार्य सत्वरमेव द्विजगृहं गत्वा सविनयं नत्वा चावदत्। महाराज! अहं प्राञ्जलीभूय भवन्तम्प्रार्थये। अहमद्यैव तुभ्यं सुवर्णमुद्राणां लक्षं प्रदास्ये। भवान् परश्वोभा-विन्यां कथासमाप्तौ यत्किञ्चित्कथोपहारो भवेत्, तन्मह्यं राजकीय नियमानुसारेण लेखं विधाय समर्पयतु। येनास्माक मायत्यां मिथो वैमनस्य नोत्पद्येत! द्विज आश्चर्यचकितो भूत्वा श्रेष्ठिनम्प्रत्यवदत्।

श्रेष्ठिन्, अहं निर्जनेवने श्रीराममन्दिरे केवलं भगवते कथाः श्रावये, न तत्र कथा-समाप्तौ विशेषोपहारप्राप्तिमहमाशासे। अतो भवान् यथा कथयति तथैवाहं कर्तु-मुद्यतोऽस्मि।

एवं तयोर्मिथः समये जाते द्विजोऽसौ कथोपहार विनिमयेन लक्षमिताः सुवर्णमुद्रा आदाय सर्वं स्वकथोपहारजातं राजकीयनियमानुसारेण लेखं विधाय श्रेष्ठिने प्रदत्तवान्। कथा समाप्तिदिवसे श्रेष्ठिनः समक्षमेव स्वकीयां कथां समाप्तामकरोत्। श्रेष्ठी तु सुवर्ण मुद्राणां वृष्टिं प्रतीक्षतेस्म। कथासमाप्तिः प्रातरेवाभूत्, सुवर्णमुद्राणां वर्षणं प्रतीक्षमाणस्य श्रेष्ठिनो मध्याह्न समयो जातः। नाद्य यावत् क्वापि सुवर्ण मुद्राणां वृष्टि जाता।

श्रेष्ठिनोऽनुरोधाद्द्विजो द्वित्रान्मुहूर्तान् पुनरपि प्रतीक्ष्यअन्ते श्रेष्ठिनमनुमान्य स्वगृहं गतः।

श्रेष्ठी तु सायं यावत् तत्रस्थितः सुवर्णमुद्राणां वृष्टिं प्रतीक्षमाणो न यदा तत्र किमपि दृष्टवान्, सर्वस्वं द्विजाय प्रदाय च न यदा स्वयं किमपिलब्धवान्, तदातितमां विषण्णो मन्त्रौषधि निरुद्धबलः सर्प इव प्रतिपत्तिविरहितश्च किमिति मृषा वदन् स्वं लोकान् प्रतारयसि, इति वदन् कुपितः सन् श्रीहनुमतो मूर्त्तिं स्वचरणेनाताडयत्। श्रेष्ठिनः पादो मूर्त्तौ दृढं संलग्नोऽभूत। श्रेष्ठी विस्मितः सन् यावत् प्रयत्नशतैरपि स्वचरणं प्रतिमातः पृथक् कर्त्तुं न शक्तोऽभूत्, तद्वेदनयातिव्यथितश्च रोदितुम्प्रारेभे, तावन्मन्दिराभ्यन्तरात् पुनरप्यलौकिकी वागुदभूत।

श्रीरामः स्वभक्तं हनुमन्तं सम्बोध्य वदतिस्म। हनुमन्, कथावाचयितुर्द्विजस्य कथ-समाप्तिर्जाता। किन्त्वया तदिच्छानु रूपः कथोपहारो निष्पादितः स्वित्?

हनूमान प्राञ्जलीभूय प्रतिवदतिस्म, विजयोऽस्तुस्वामिनाम्! कथाकर्त्रे द्विजाय कथा समाप्तौ प्रदेयोपहारः कथा समाप्तेः पूर्वमेव प्रदापितः। यत् किञ्चित्प्रदेयोपहारोऽवशिष्ट-स्तत्प्रदापनाय मयैकः स्तेनो निगृहीतः। यदा स द्विजाय पूर्वं प्रदत्तस्य द्रव्यस्यार्धं द्रव्यं पुनरपि प्रदास्यति, तदैव तमहंमोक्ष्यामि, नान्यथा कथमपि।

इति तां दैवीं वाचं निशम्यातिविषण्णो व्यथितश्च श्रेष्ठी तां सर्वां रात्रिं महता कष्टेन यापयामास।

प्रातर्यदा श्रेष्ठिनं मृगयमाणास्तदीय पुत्रभृत्यादयः समुपागताः, तदाते श्रेष्ठिन इमा-मतिशोचनीयां दशामवलोक्यभीताः किं जातमिति पप्रच्छुः। सोऽपि श्रेष्ठी यथापूर्वं वृत्तं

[ शेषः अष्टम पृष्ठे द्रष्टव्यः ]

## स्वमात्रा प्रत्यग्रजातं व्यापादितोज्झितं कमप्यवैधं शिशुं प्रति,

[ ले०, श्री प० विश्वनाथ गौड़ः, एम० ए०, शास्त्री, साहित्यरत्नम्,]

द्रुतविलम्बितम्

अयि नवागत ! मुग्ध ! कृशाहस !!!
व्यवसितं किमिहैत्य त्वया शिशो ।
कुसुम-कोमल-कान्त-कलेवरं,
जगदिदं सहते न भवादृशम् ॥१॥

मुदमुपैति जनः सुतसम्भवे
समभिनन्दति जन्ममहोत्सवैः ।
त्वमपि मातृकदर्थनतत्परै
र्जनगणैः कितवैरभिनन्द्यसे ॥२॥

सुत उपैति हितं जननीजनादिति कथा वितथा तव सा कृते ॥
त्वयि सुते न चकार कृपालवं, विपदितः कतमा नु गरीयसी ॥३॥

जनकयोर्जनिता न रतिस्त्वया,
तव कृता न च मांगलिकी क्रिया ॥
अनभिवाञ्छित ! कापि न सत्क्रिया
तव जनिर्जनिता विधिना मुधा ॥४॥

असुषु कर्त्तनमेव न नालके,
मलवहा नलिका न च दोलिका ॥
परुषचैलमहो न वराम्बरं ।
तव मनोज्ञ ललाटलिपिः खला ॥५॥

जगदिदं न निवासपदं क्वचित्, यदिह धर्मगतिश्छद्मना परा ॥
उपरितश्च जनो बत ! धार्मिकः मनसि निष्ठुरपापमलीमसः ॥६॥

जनसमाजविधिः परुषो भृशम्
कुघटनाशतमित्थमहोऽनिशम् ॥
शठजनैः सरलः परिपीड्यते ।
धिगिति खं शिशुनोत्पतितं शुचा ॥७॥

---

[ सप्तम पृष्ठस्य शेषांशः ]

तत्सर्वं सङ्क्षेपेणोक्त्वा दैन्येनावदत्, कथाकर्त्रे द्विजाय राजकीयनियमानुसारेण लेखं विधाय लक्षार्धमिताः सुवर्णमुद्राः पुनरपि यूयं यदि प्रदद्युस्तदैव ममास्मात्कष्टान्मोक्षोभविष्यति, नान्यथा प्रयत्नशतैरपि, इति ।

इत्युक्तास्ते यथाशक्यं त्वरया तत्कथनानुसारेण तस्मै द्विजाय द्रव्यं प्रदाय श्रेष्ठिनं तस्मात्कष्टादुन्मोच्य च स्वगृहं निन्युः । ( अस्याः कथाया निष्कर्षस्त्वयं, यत्परमेश्वरे द्रढीयान्प्रत्ययो न कदापि निष्फलो भवति, प्रत्युत तत्फलं लोकोत्तरं भवति )

# पण्डित राजधानी

( ले० प० विद्याधरः शास्त्री एम०, ए०, )

१. युगे युगे नव्यविमर्शशीलैः पुराणरत्नानियतप्रतिज्ञैः ।
विद्वद्वरेण्यैः परिसेव्यमाना वाराणसी पण्डितराजधानी ॥

२. सरित्सुराणां सुरभारती च यस्यां प्रसन्ने वहतः समाने ।
गंगातरङ्गैर्विजयातरङ्गा यस्याश्चतीरे सबला भवन्ति ।

३. विद्याविलासाय मनःप्रशान्त्यै शङ्कावतां संशयनाशनाय ।
स्वात्मप्रबोधाय मुमुक्षुमुक्त्यै धात्रादिकालाद्रचितापुरीयम् ॥

४. श्रीमालवीयैर्विबुधाग्रगण्यैर्विद्यालयो विश्वसुशिक्षणाय ।
संस्थापितो यत्र महान् प्रशस्यः स्वराष्ट्रशिक्षार्पितसर्वभावैः ॥

५. विद्यालयानां विबुधालयानां मोक्षालयानां नगरी सुरम्या ।
विभ्राजते विश्वपतेः प्रिया सा वाराणसी पण्डित राजधानी ॥

# अथ 'रसख्यातिः'

( ले० प० केदारनाथ ओझाः, व्या० न्या० वे० आचार्यः )

सरसहृदयवश्यभोगं रोगं हरन्तमन्यविषयजातम् ।
वन्दे कविवरहृद्यं नवतां दधतं रसं कञ्चित् ॥

श्रीबालकृष्णगुरुपादजलाभिपूतः
केदारनाथ उदितार्थविचारनाथः ।
ख्यातिं रसस्य तनुते नयवित्सुगम्यां
नानापथां सकलदर्शनरागरम्याम् ॥

काव्यस्य दृश्यश्रव्ययोरुभयोरपि विशेषयोः सातिशयप्रवृत्त्या सहृदयतावशोन्मिषितकाव्यार्थभावनाद्वारकः कश्चिदानन्दानुभवः सिध्यन् सहृदयप्रत्यक्षश्च न किञ्चित्साधनान्तरमपेक्षते । परम्—

यथा बहुद्रव्ययुतैर्व्यञ्जनैर्बहुभिर्युतम् ।
आस्वादयन्ति भुञ्जाना भक्तं भक्तविदो जनाः ॥
भावानभिनयसम्बद्धान् स्थायिभावांस्तथा बुधाः ।
आस्वादयन्ति मनसा तस्मान्नाट्यरसाः स्मृताः ॥

इति नाट्यशास्त्रोक्तसम्प्रदायमनुसृत्य आस्वादपदवीं दधानं रसपदाभिधेयं कमपि पदार्थमभ्युपगच्छन्ति आलाङ्कारिकनिबन्धाः। तादृशे रसपदार्थस्वरूपे स्थायिभावस्य रसत्वं व्याचक्षाणानामपि आचार्याणां तत्तत्कल्पनाप्रौढिपरम्परया विप्रतिपत्तिः परिदृश्यते निबन्धग्रन्थेषु।

तत्रालङ्कारिकमूर्धन्यश्रीमदभिनवगुप्तमतस्यापि व्याख्यानभेदाद् द्वौ पन्थानौ प्रचलतः। मार्गद्वये न स्थायिभावो रसोऽपितु तस्यास्वाद इति समानम्।

(१) परं स्थायिभावस्य भग्नावरणेन सच्चिदानन्देन गोचरीक्रियमाणत्वमास्वाद इति प्रथमः।

(२) अन्ये तु स्थाय्युपहितात्मानन्दविषयिणी अन्तःकरणवृत्तिरास्वाद इति वदन्ति।

(३) पण्डितराजजगन्नाथस्तु—रसो वै सः, रसं ह्ययं लब्ध्वा आनन्दी भवतीत्यादितैत्तिरीयश्रुत्यक्षरस्वारस्येन स्थाय्युपहितसच्चिदानन्दं स्थायिन आस्वादं रसं व्यवस्थापयति।

त्रयाणामेषां मतानां वासनारूपेण स्थितानां शकुन्तलादिविभावविषयकाणां सामाजिकानामेव स्थायिभावानामास्वादः समानः।

(४) साङ्ख्यसरण्या व्याख्यातृत्वेन प्रसिद्धस्य भट्टनायकस्य मते सामाजिकरत्यादेरास्वादस्य साम्येऽपि स्थाय्युपहितस्य सत्त्वगुणपरिणामात्मकसुखस्य साक्षात्काररूपो भोग आस्वादरूपतामादधानो रसः। एतन्मतेऽपि आस्वादो रस इति पर्यवस्यति। एते चत्वारोऽपि रतेरास्वादका इति स्थितम्।

अग्रिमेषु स्थायिभावस्यैव रसनिष्पत्तिं वर्णयत्स्वपि चतुर्षु मतेषु अनुकरणीयेषु दुष्यन्तादिषु रत्यादयः स्थायिभावाः, रसास्वादस्तु सामाजिकेष्विति विभिन्नैव प्रक्रिया। दुष्यन्तनिष्ठरत्यादेरेव सामाजिकैरास्वाद इति भावः।

(५) भट्टलोल्लटस्य मते दुष्यन्तत्वशकुन्तलाविषयकरत्यंशेऽलौकिकेन नटरूपविशेष्यांशे लौकिकेन सन्निकर्षेण जायमानो विशिष्टो नटविशेष्यकः 'दुष्यन्तोऽयं शकुन्तलाविषयकरतिमान्' इत्याकारकसाक्षात्काररूपः सामाजिकनिष्ठो दुष्यन्तादिवृत्तिरत्यादेरास्वादः। अत्र नये दुष्यन्तादिनिष्ठो रत्यादिरेव रसः, पूर्वोक्त आस्वादस्तु सामाजिकानाम्। आनन्दानुभवविषये न किञ्चित्प्रोच्यते।

(६) श्रीशङ्कुकमते पञ्चममतसाक्षात्कारसमानाकारिकया नटपक्षिकया दुष्यन्तोऽयं शकुन्तलाविषयकरतिमान् इत्यनुमित्या गोचरीक्रियमाणो दुष्यन्तादिवृत्तिः स्थायिभावो रसः। पूर्वमते साक्षात्कारः आस्वादः, रसरसास्वादौ विभिन्नौ अत्रमतेऽनुमितिरास्वादोऽनुमितिविषयश्च रसः। रसो दुष्यन्तादिनिष्ठ आस्वादश्च सामाजिकानाम् केवलमास्वादस्य साक्षात्कारत्वानुमितित्वाभ्यां विशेषः। आनन्दश्च विषयसौन्दर्यवशादिति मतम्।

(७) नव्या अद्वैतवेदान्तप्रक्रियावासितान्तःकरणाः सर्वत्रैवानिर्वचनीयोत्पत्तिं भ्रमस्थले पश्यन्तो दुष्यन्तादिवृत्तिरत्यादिना सामाजिकान्तरात्मनि

निष्पन्नस्य रसस्य रसास्वादस्य च वर्णनमभिनिविशमानाः प्रथमं दुष्यन्तत्वादिकं स्थायिभावाश्रयवृत्ति धर्ममनिर्वचनीयं सामाजिकात्मनि समुत्पाद्य दुष्यन्तत्वावच्छिन्ने तस्मिन् शुक्तिशकले रजतखण्डमिव दुष्यन्तादिनिष्ठशकुन्तलाविषयकरत्यादिं तादृशं समुत्पाद्य च अन्तःकरणवृत्तिसुखादिमिव भग्नावरणचिदात्मना संसृष्टमास्वाद्यमिति वर्णयन्ति। अत्र दर्शने दुष्यन्तादिनिष्ठो रत्यादिः स्थायिभावः, सामाजिकान्तरङ्गे जायमानोऽनिर्वचनीयो नूतनः शकुन्तलालम्बनो रसः आस्वादश्च तादृशस्य साक्षात्कारः, आनन्दश्च साक्षात्कारे आत्मानन्दोदयादेव।

(८)नव्यैकदेशिनोऽख्यातिवादपथपक्षपातिनो व्यञ्जनावृत्तिमनिर्वचनीयख्यातिञ्चासहमानाः 'यत एव काव्यार्थभावनाविशेषादेतादृशस्यानिर्वचनीयस्य ख्यातिरागृह्यते स एवालौकिकमहिमशाली भावनाविशेषो विषयासद्भावेऽपि दुष्यन्तादिनिष्ठानेवातीतान् रत्यादीन् सामाजिकान् न साक्षात्कारयेदिति केन तोलितोऽस्य महिमा' इति प्रौढिपूर्वमनपेक्ष्य ख्यापयन्तः काव्यार्थभावनावशादेव सामाजिकहृदि समुद्यन् 'अहं शकुन्तलाविषयकरतिमान् दुष्यन्तः' इत्याकारकः साक्षात्कार एव रस इति व्यवस्थापयन्ति। साक्षात्कारश्च शकुन्तला-दुष्यन्तरत्याद्यंशेऽलौकिक आत्मांशे च लौकिकः। अवाच्या अलक्ष्या च रतिर्व्यञ्जनावृत्तेरभावादनुमीयमाना ज्ञानलक्षणया सन्निकृष्यते। अनुकार्यदुष्यन्तादिनिष्ठरत्यादेः सामाजिकनिष्ठः साक्षात्कार एव पूर्वोक्त आस्वादो रसो न तु कश्चिद् रसस्य आस्वादः। प्रयोगस्तु भाक्तः। आह्लादश्च काव्यार्थभावनोत्थात् साक्षात्कारस्य वैलक्षण्यादेवेति निष्कृष्यते। इति।

अलौकिकेऽस्मिन् विषये कल्पनामात्रशरीराणां मोक्षपदवीमिव रसास्वादानन्दानुभूतिमारोहन्तीनां सोपानपरम्परामिवाचरन्तीनां प्रक्रियाणां का समीचीना का च नेति वस्तुतो वक्तुं न पार्यते सर्वेषां तैर्थिकानां स्वस्वमार्गे प्रतिष्ठितत्वात्।

अत एव प्राथमिकेषु चतुर्षु मतेषु सामाजिकरत्यादेरेवास्वादात्सहृदयानामेव रसास्वादाधिकारः सिध्यति, रसास्वादानुकूलवासनाविशेषवतामेव सहृदयत्वात् अनुकार्यदुष्यन्तादिनिष्ठरत्यादेरास्वादनयेतु सामाजिकवासनानामुपयोगाभावेन जरन्मीमांसकादीनामपि रसास्वादप्रसक्त्या सिद्धान्तव्याकोपभयात्पञ्चमादीनि मतानि हेयानीति केषाञ्चिद् व्याख्यानं मुधैव, सर्वैरपि देशिकैः स्वस्वप्रक्रियायामन्यनिष्ठरत्यादेरास्वादस्य सहृदयतोल्लसितभावनाकार्यत्वेनैव वर्णनात्। तथा च सहृदयतां विना भावनोल्लासाभावेन रसास्वादस्यैव खपुष्पायमाणत्वात्कुतो निर्वासनानां रसास्वादप्रसक्तिः।

## वस्तुसौन्दर्यवशादानन्दः

एवमेव प्रत्यक्षज्ञानस्यैवाह्लादहेतुतया सप्तानामपि मतानां सम्यक्त्वेऽपि षष्ठं श्रीशङ्ककमतं न समञ्चतीति वचोऽनर्हम्, तेषां मते वस्तुसौन्दर्यायत्तस्याह्लादस्यानुभवे वस्तुज्ञानगतम्परोक्षत्वमपरोक्षत्वं वा किं कुर्वीत। किं पुत्रादीनामात्मीयानामुन्नतिः साक्षात्क्रियाणेव कुण्डलीस्थग्रहवशादनु

मीयमाना नाह्लादयति ? व्ययबोधकपत्रेण समृद्धिपूर्णतयाऽनुमीयानः कोषः किं राज्ञो नानन्दाय ? अवन्तेश्चात्मीयानामनुमितेव साक्षात्क्रियमाणापि क्लेशयत्येव, तस्मात्सुष्ठूक्तं श्रीशङ्कुना वस्तुसौन्दर्यंशादेवाह्लाद इति। यत्र कुत्रचिदनुमितिवशान्नाह्लादोऽनुभूयते विषयसौन्दर्यसत्त्वेऽपि तत्रानुमितौ अप्रामाण्यज्ञानास्कन्दितत्वस्य प्रभावपातो बोध्यः।

विषयसौन्दर्यवशादेवाह्लादानुभवं विविच्य विभावादिषु यस्य कस्यापि सौन्दर्यवशादानन्दानुभवमनुसंदधानः 'विभावादिषु य एव चमत्कारी स एव रसः' इति मतान्तरमवातारयत्पण्डितराजः।

यद्यपि—अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्॥

इत्यादिवेदान्तिडिण्डिमो वस्तूनां सच्चिदानन्दे ब्रह्मणि अध्यस्तत्वाद् विषयेष्वप्यानन्दो ब्रह्मण एवेति घोषयति, तेन च वेदान्तप्रक्रियावशात्सच्चिदानन्दसम्पर्कस्वरूप आस्वाद एवाह्लादयेत् सामाजिकान् नान्यविध अस्वाद इत्यायाति, तथापि विवेचनपरीक्षायां विषयसौन्दर्यमेव तिष्ठत्याह्लादमूलकतया अन्याश्च प्रक्रिया विशीर्णा भवन्ति।

तथाहि—प्रथममुक्तडिण्डिमस्यैव स्वरूपं विविच्यताम्। ब्रह्मण आध्यासवशादेव वस्तूनां प्रियत्वं स्वीक्रियेत तदाऽविशेषाज्जगदिदं प्रियमेव स्यान्नकिञ्चिदप्रियम्। किन्तु वस्तुस्वभाववशादेवात्मानन्दाध्यासेन किञ्चिन प्रियम् अन्यच्चाप्रियमिति तेषामपि प्रक्रिया। अत एव स्वभाववशादेव आनन्दांशस्यारोपाभावेन दुःखं सर्वदाऽप्रियमेवावतिष्ठते। साङ्ख्यमते सत्त्वरजस्तमसां परिणामाः पदार्था इति वस्तुनः स्वभावादेव सुखदुःखे संसिध्यत एव।

किञ्च आद्येषु त्रिषु मतेषु साक्षात्कारे आत्मानन्दोदयो यदि तर्हि काव्यातिरिक्तस्थले घटादिप्रत्यक्षे आत्मानन्दोदयोऽस्ति नवा आद्ये तत्राप्यानन्दोदये साधारणे जाते किं कृतं काव्येन ? यदि तत्र प्रकाशाय चिदंशस्यैवाध्यासो नानन्दांशस्य, काव्यस्थले तु आनन्दस्यापीति ब्रूषे, किंकृतोयं विशेषः ? इत्यपि ब्रूहि; काव्यकृत इति चेन् किं करोति काव्यमित्यप्यालोच्यताम्। वयन्तु ब्रूमः काव्यमलौकिकं नूतनं शब्दार्थस्वरूपमुपनयति, सहृदयोल्लसिता भावना तु तत्क्षेव क्लेशमोहप्रयोजकांशं तन्वन्ती सुखमात्रजनकांशं सूक्ष्मतरं समाजिकान्तरङ्गे स्थापयति, यद्वशात् काव्यसमर्पितः सहृदय-हृदयभावितः शोको जुगुप्सा वा आह्लादायैव न क्लेशाय। तस्मात्काव्यतदर्थभावनयोर्विलक्षणवस्तुसमर्पणेनोपयोगः। वस्तुसौन्दर्याच्चानन्दानुभव इति सिध्यति।

सप्तमे नव्यमतेऽपि अन्तर्निहितो वस्तुसौन्दर्यरूपः सारः। साक्षात्कार आत्मानन्दोदयवशादाह्लाद इति तन्मतम्, तत्तु आदिममतत्रयवद्विविधविकल्पजालबद्धं सत्पूर्ववदेव न प्ररोहेत्, यदि साक्षात्कारबलेनैवानन्दोदयस्तर्हि दुष्यन्तादिनिष्ठरत्यादेरेव भट्टलोल्लटवत्साक्षा-

त्कारेण कथं न तुष्यन्ति नव्याः ?। कथञ्च नूतनस्यानिर्वचनीयस्योत्पादने प्रयतन्ते ?। न ह्यनिर्वचनीयस्यैव साक्षात्कारो भवत्य ह्लादको न तु व्यावहारिकस्येति दर्शनं तथा यतन्त इति वाच्यम् व्यभिचरितत्वात्। व्यावहारिकेणापि सुन्दरवस्तुना आह्लादस्योदयात्, अनिर्वचनीयेनापि महर्घेण शुक्तिशकले रजतखण्डेन तुष्यतु नाम परं स्वीये रजतखण्डे जायमानेन शुक्तिशकलेन कीदृग् दुष्यतीति स एव जानाति। इदन्तुहृद्यं विभाति—लौकिकसामग्रीसमर्पितो दुष्यन्तनिष्ठरत्यादिर्लौकिको दुःखमोहप्रयोजकांशेनापिघटितो न समेभ्यः सहृदयेभ्यः सुखप्रदः। किन्तु सुखांशमात्रेण नूतनतया निष्पन्न एव। अन्यानिर्वचनीयापेक्षया विलक्षणं सौन्दर्यन्तु काव्यभावनावशादेवेति सर्वत्र समानम्।

इत्थमेव चतुर्थे भट्टनायकमते वस्तुसौन्दर्यमनपेक्ष्य न किञ्चिदानन्दानुभवहेतुतया पर्यवस्यति। तथाहि साङ्ख्य प्रक्रियायां तत्तत्सुखदुःखाकारेणपरिणताया बुद्धेः पुष्करपलाशवन्निर्लेपेऽसङ्गे पुरुषे ऐक्याध्यासरूप भोगो दुःखादेरपि पौरुषेयः समानो न किञ्चिद् रसास्वादे वैलक्षण्य सम्पादयति, रजस्तमसी अभिभूयोद्रिक्तस्य सत्त्वस्य सुखाकारपरिणामोऽपि सर्वत्र लौकिकसुखसाक्षात्कारे समानः सन् न भेदमावहति, अपि तु काव्यसमर्पितस्य वस्तुनः सौन्दर्यस्वभाव एव रजस्तमसोरभिभवे सत्त्वोद्रेके च प्रभवतीति किमु वक्तव्यम्।

एवं सति अष्टमे नव्यैकदेशिमते आनन्दानुभवहेतुतया वर्णितो दुष्यन्तादिनिष्ठरत्यादेर्मानससाक्षात्कारप्रभावो विषयसौन्दर्यबलादायात इति पर्यवसेयम्।

भट्टलोल्लटस्य पञ्चमे मतेऽपि प्रायः श्रीशङ्कुमतवदेवोपसंहरनं भवेदित्यलमेकत्र विषयेऽभिनिवेशेन।

## ॥ अथानन्दस्वरूप मीमांसा ॥

वेदान्तिनये द्विविध आनन्दपदार्थः। प्रथम आत्मस्वरूपोऽलौकिकः द्वितोयश्च सुखरूपा चेतसो वृत्तिर्लौकिकी, आदिमत्रये प्रथमः, सप्तमे नव्यमते द्वितीयः। सांख्यमते बुद्धिसत्त्वस्य सुखाकारपरिणामविशेषो लौकिक एव, अन्यसुखानामपि तादृशत्वात्। स च चतुर्थे भट्टनायकमते गृहीतः।

नैयायिकानां दर्शने वस्तुनोऽनुकूलतया वेदनाजन्य आत्मवृत्तिर्विशेषगुणः सुखं लौकिकमेव। तच्च पञ्चमषष्ठाष्टममतेषु परिगृह्यत इति तेषां वर्णितपदार्थसहचारात्प्रतीयते। तथा च आद्यमतत्रयेऽलौकिकस्य अन्येषु च पञ्चसु मतेषु लौकिकस्यानन्दस्यानुभवः तत्रापि कुत्रचिदलौकिकत्वव्यवहारस्तु उपाये काव्यार्थयोस्तद्भावनायाञ्च वर्तमानेन लौकित्वेन प्रयुक्तो भाक्तो न तु वस्तुतः, तादृशालौकिकस्याप्रसिद्धेः समन्वयाभावाच्च।

वस्तुतः प्राथमिकेष्वपि त्रिषु मतेषु लौकिकस्य चेतोवृत्तिरूपस्य सुखस्यैवानुभवो ज्यायान्, असमाहितमनसामलौकिकात्मस्वस्वरूपानन्दानुभवेऽनधिकारात् शास्त्रयुक्तिविरुद्धत्वाच्च। सहृदयहृदयं रसास्वादानन्दानुभवे तस्य

विलक्षणसामग्रीजन्यत्वे आनन्दस्य लौकिकसुखान्तरवैलक्षण्ये सातिशयत्वे च साक्षिभवदपि अपरिच्छिन्नस्य आनन्दगतालौकिकत्वस्यानुभवे कथं साक्षितामाश्रयेत् ?।

पण्डितराजस्तु अभिनवगुप्तपादाचार्याणां काव्यनाटकाख्यामानन्दानुभवाभिनवाभिनिवेशं पश्यन् श्रुतिमप्युदाजहार। वस्तुतः काव्यरसस्य रसमानतासारत्वेन बहुभिर्वर्णनादास्वाद्यता विद्युदुद्योतवदस्थिरा। श्रुतिप्रतिपाद्य आत्मरूपोऽनुभवो न तु अनुभाव्यः। आत्मानन्दं रसं प्राप्य स्वयमेवानन्दी भवति, आनन्दाकारवृत्त्या तु लौकिक्या जीव आनन्दी भवति। तथा च लोकस्य लौकिक एवानन्द इति आनन्दीति पदेन श्रुतिः सूचयति। इत्यलमत्र दिग्दर्शनातिरिक्तेन।

इदन्त्ववधेयम्-समास्वपि रसास्वादप्रक्रियासु प्रदर्शितासु आनन्दानुभवस्य सत्यतां दधानास्वपि उपाये उपेये वा ज्ञाने अवश्यं भ्रमत्वम्, भ्रमसंपादिका च सर्वत्रैव सहृदयोल्लासिता भावनैव समाना। तत्र पञ्चमादीनां चतुर्णां मतानामुपेयेज्ञाने (ख्यातेरवसरः) भ्रमत्वम्, आद्येषु चतुर्षु तु उपायभूते ज्ञाने एव।

तथाहि—एते आचार्याः काव्यसमर्पितां शकुन्तलादिनायिकां साधारणीकरणापरपर्यायभावनाविशेषमहिम्ना आलम्बनतां नीत्वा शृङ्गाररसेनाभिषिञ्चन्ति सामाजिकान्। यद्विषयिणी रतिः स्वस्मिन् वर्तते, यस्याश्च इयमगम्येति बुद्धिर्नोदेति सैव विभाव इति संक्षिप्तः सरलार्थः। यथाऽन्यत्र भ्रमस्थले शुक्तिरजतयोर्विशेषांशस्य ज्ञानं न भवति सामान्यांशस्तु ज्ञायते, तथाऽत्र साधारणीकरणादिव्यापारद्वारा स्वनायिकामपेक्ष्य शकुन्तलायां यो विशेषो दुष्यन्तरमणीत्वशकुन्तलात्वकण्वकन्यात्वातीतत्वादिः स तिरोधत्ते, कान्तात्वेन च स्फूर्यमाणा स्वविभावतामुपगता शकुन्तला रसोत्पादहेतुरिति शकुन्तलायां विभावभ्रमाधीनो रसास्वाद इति तेषां दर्शनम्।

अन्येषां मते उपेयभूते रसरूपे रसास्वादरूपे वा ज्ञाने भ्रमत्वं स्फुटमेव। भ्रमस्थले ख्यातिनाम्ना दार्शनिकप्रक्रिया क्रमशः प्रसिद्धा।

# बुद्धशङ्करौ ॥

[लेखकः प. ए. एम्. रामनाथदीक्षितः, एम. ए. वेदसहित्याचार्यः, वेदविभागाध्यापकः, संस्कृत महाविद्यालयः का. हि. वि. वि]

सदाशिवसमारम्भां भगवत्पादमध्यमाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ॥

अयि संस्कृतरत्नाकरपाठका विबुधवर्या, विदितमेव भवतां यत्,लोककल्याणं चिकीर्षुर्भगवानरविन्दनाभः स्वमायया कदाचिच्छैवम् अन्यदा वैष्णवं च वपुराकलयन्धर्मरक्षापूर्वकं नखिलाः प्रजास्तत्तदुचितमार्गेषु प्रवर्तयन् विष्टपमिदमवतीति । सति चैवं कदाचिदियमाशङ्का मनसि समुदियात्-यत्-किमिति सनातनं मतं खण्डयित्वा बौद्धं मतं प्रातिष्ठ ? तदनु च तदपि खण्डयित्वा शाङ्करं मतं स्थिरीचकारेति । अत्र च केचन दुराग्रहग्रस्तान्तःकरणा बुद्धः किल विष्णुः । तेन स्थापितं वैष्णवं मतमसहमानः शिवः शङ्कराचार्यात्मनाऽवतीर्य तन्मतमचखण्डदिति समादधति । परं नेदं समाधानं चित्तमारोहति पांसुलपादानामपि । यतो हि वयं सनातनिनः । अस्माकं मौलिकः सिद्धान्तो न परेषां मतं द्वेष्यम् इति । तर्हि कथं बौद्धमतं प्रमाणभूत आचार्यः खण्डयामासेति विमृशता मया यद् वृद्धेभ्यः श्रुतम्,यच्चाधिगतमितस्ततदत्र श्रीमतां पुरत उपस्थापयामि ।

स्वभावोऽयं वस्तुनो यत्कियताचन कालेन शैथिल्यावाप्तिर्नाम । दृश्यन्ते च पक्वेष्टकासुधाप्रभृतिभिर्द्रव्यैरारचितानि देवालयप्रासाद-हर्म्यादीनि जीर्णानि भवन्ति कालक्रमेणेति । इयमेव दशा धर्मेऽपि । यदा हि धर्मस्य ह्रास आपतति यदा वाधर्म उत्पतति तदा तन्निरोद्धुं सर्वेश्वरः भुवनमिदमवतीर्य धर्मरक्षां करोति । तथाचोक्तम्-यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् इति । अत एव कृष्णात्मना चतुर्भुजोऽवतीर्य धर्मरक्षां चकार । अनन्तरं च सर्वेऽपि द्विजाः श्रौतानि स्मार्तानि च नित्य-नैमित्तिक-काम्यभेदेन भिन्नानि कर्माणि कुर्वन्तो भुवमिमां धारयामासुः । बहुषु वर्षेषु व्यतीतेषु वैदिककर्मानधिकृता अपि जना ऐहिकामुष्मिकफललिप्सया तानि कर्माणि कर्तुमारेभिरे । ब्राह्मणाश्च धनाकृष्टचेतसोऽयाजयन् । यद्यपि दर्शपूर्णमासादीनामिष्टीनां चोदनालक्षणत्वाद्धर्मत्वमस्त्येव तथापि यं पुरुषविशेषमधिकृत्य ता विहितास्तान्प्रत्येव धर्मत्वम् तथा च वैश्यमुद्दिश्य विहिते वैश्यस्तोमे ब्राह्मणराजन्ययोः, राजसूये विप्रवैश्ययोश्चानधिकार इति वाक्यतात्पर्यविद उद्घोषयन्ति । तथाहि कोधर्मः कश्चाधर्म इति प्रत्यक्षादिप्रमाणैरवगन्तुं न शक्यते साधनाभावात् । परं तु नित्यैः शब्दैराम्नायापरपर्यायैरेवावगम्येते । ते च शब्दा यथाऽम्नायन्ते तथैव स्वीकार्याः । न तत्र युक्त्याऽन्यथयितुं शक्यम् । श्रुतिश्च वैश्यो वैश्यस्तोमेन यजेत, राजा राजसूयेन स्वाराज्यकामो यजेत इत्येवमेवामनति ततश्च यद्यनधिकृतः कर्म करोति तेन न समीहितलाभः, अपि तु निरयप्राप्तिः ।

एवम् अपराह्णे पिण्डपितृयज्ञश्चन्द्रादर्शनेऽमावास्यायाम् (क.श्रौ.४.१.१.) इतिस्मृतः पिण्डपितृयज्ञः यद्यमावास्यायामपराह्णे केनापि निमित्तेन नानुष्ठितः। परेद्युश्च तत्काले कृतो धर्मो न भवति। यथाकालमननुष्ठानात्। अकाले कृतमकृतमेव। यद्येवं कश्चन यजमानः कार्यभारेणान्येन वा निमित्तेन दर्शपूर्णमासौ यथाकालमनुष्ठातुमशक्तः कालान्तरे तावेवाहरन्धार्मिक इत्याख्यायते। सैव कथा किमिति पिण्डपितृयज्ञे नाङ्गीक्रियत इति चेत् श्रौतसूत्रव्याख्यातॄणां वचनमेव प्रमाणमिति तत्समाधानाय तदीयं वाक्यमत्र संगृह्णे। पौर्णमासेष्टेरमान्तं, दर्शेष्टेः पूर्णिमान्तं गौणः कालः पिण्डपितृयज्ञस्तु स्वकाल एव न गौणकाले। (कात्यायनश्रौतसूत्रवृत्तिः सरला.२५.४.२१.) एवमादिप्रतिपादनस्यायमभिप्रायः यंप्रति यदा यत्कर्म विहितं तं प्रति तद्धर्मो भवति नान्यदेति।

न केवलमयं शास्त्रीयो मार्गः—अपि तु लौकिकोऽपि। तथाहि-लेखालये (पोस्ट आफिस) सेवकः सायं चतुर्थवादनावसरे पेटिकामुद्घाट्य पत्राणि गृह्णाति। यदि वयं क्षणं विलम्ब्य गत्वा पत्रमिदमपि गृहाण इति ब्रूमस्तदा स सपद्येवमुत्तरं यच्छति समयस्त्वतीतः। नाहमस्य ग्रहणेऽधिकृतः। यदि गृह्णामि तर्हि ममेतो निस्सारणमेव भवेत्। ग्रहणे चाधिकृतो लेखालयाध्यक्ष इत लौकिकोऽयमाचारो वैदिकधर्ममूल एव।

ततश्चानधिकृता नरा यदा लोभेन धर्ममार्गे प्राचलंस्तदा धर्मस्य ग्लानिरधर्मस्योत्थानं च समभूदेव। देवाश्च के द्विजाः के द्विजेतरे ? केषां हविर्ग्राह्यंकेषां नेत्यजानन्तो जोषमासत। ऋच्छति काले सर्वत्राधर्मे प्रसरं गते देवाः क्षीरशायिनं नालिनायतलोचनं शरणमगुः। तेषां च शोचनीयां दशां विलोक्य तत्परिजिहीर्षया परः पुरुषः धर्मरक्षां चिकीर्षुः बुद्धात्मना भुवं मण्डयामास। अवतीर्य च सर्वेषां वेदेषु तदुदितकर्मसु च श्रद्धां समवलोक्य नेमे तृतीयतुरीयोपायाभ्यां जय्याः इत्याकलय्य तत्र तत्र श्रद्धाविघटनार्थं वैदिकवचसामप्रामाण्यं बुध्या युक्तया च प्रसारयामास वेदो ऽयं पौरुषेयः, द्विजैः स्वजीविकार्थं मारचितः। न तत्र विश्वस्य कृच्छ्रार्जितं धनादिकं व्ययितं कुर्यात्। यदि सोमेन पुरोडाशेन चरुणा पशनान्येनवा श्रुतिप्रतिपादितेन द्रव्येणामृतान्धसां दिविषदां तृप्तिः तर्हि देशान्तरं गतं स्वबन्धुमुद्दिश्यात्रैकस्मै ब्राह्मणाय भोजनादिदानेन किं स्वबन्धोः क्षुन्निवृत्तिर्भवति ! अन्यच्च श्रौतकर्मसु छागादीनामालम्भने छागादयस्तिर्यङ्योनिमुत्सृज्याकल्पान्तं दिवि विराजन्ते यदि मतिस्तर्हि स्वपुत्रादीनेव किमिति प्राणैर्वियोज्य यागं कृत्वा तान्तां पदवीं न प्रापयन्ति ? केवलमत्र तत्त्वान्वेषणे क्रियमाणे स्वजीविकानिर्वाहायैव कैश्चन प्रवर्तितोऽयं मार्ग इत्याभाति। जीव हिंसया निरयप्राप्तिरेव फलम्।”

एवंविधैस्सदुपदेशैः भूमिं पर्यटन्बुद्धः वाक्चातुर्येण तथा स्वकीयं मतं प्रसारयामास यथा तच्छ्रुत्वैव सर्वे वैष्णव्या मायया तिरस्कृतविवेका बुद्धवाक्यमेव प्रमाणम्, तदेव च मोक्षमार्गायाऽलमिति मत्वा श्रौतादिषु श्रद्धां परि

त्यज्य तत्रैव श्रद्दधिरे। केचन परं सनातननिनस्तत्राविश्वसन्तः कर्ममार्गमासिषेविरे। तत्र च फलानुत्पत्त्या विघटितश्रद्धास्तेऽप्यन्ते बुद्धमतदीक्षिता अभूवन्।

बुद्धात्मनावाऽवतीर्णोऽपि भगवानाम्नायवचसां तदुदितानां कर्मणामेवासत्यतामधर्मतां च प्रकाशयामास। अन्येषामहिंसा-स्तेयानृशंस्यादीनां धर्मत्वं न विघटयामास। एवमाद्यनुष्ठानमपि देवानां हितमेवाभूदिति सायणाचार्यं विरचितशङ्करदिग्विजयादवगम्यते—तथाहि

> त्रिज्ञातमेव भगवन्विद्यते यद्धिताय नः।
> वञ्चयन्सुगतान्बुद्धवपुर्धारी जनार्दनः॥ इति॥

अत्रेयं शङ्काऽऽत्मानं प्रकाशपदवीमानिनीषति—यदि रक्षा धर्मस्य चिकीर्षिता बुद्धः किमर्थं धर्माणामधर्मत्वं प्रतिपाद्य तदनुष्ठानपरानपि प्रलोभ्य धर्मस्य ग्लानिमेव प्रार्पयत्? पूर्वावतारेषु धर्मरक्षार्थमवतीर्णो भगवनरक्ष धर्मम्। किमिति तथानानुष्ठितमिति। तत्रेयं समाहितिर्जागर्ति-कालानुरोधेन भगवान्स्वलीलया तथा चकार। तथाहि पूर्वयुगेषु धर्मानुष्ठानपरान्धार्मिकान्साधून्द्विजानधार्मिका असुरादयो जिहिंसुः। तथा च तदात्वे न धर्ममार्गस्य सर्वात्मना नाशः किन्त्वेकदेशेनैवेति धर्मरक्षैव कृता। कलियुगे पुनः युगधर्मेणाक्रान्तासु प्रजासु के धार्मिकाः के वा अधार्मिका इति निश्चेतुमशक्यतया धर्ममार्गे सर्वथा विलुलोप। दृश्यते च निदर्शनं लोके महतः प्रासादस्य यत्र कुत्रापि शैथिल्ये जाते तत्रैव सुधादिभिस्संशोध्य रक्षणम्। यदि स एव प्रासादः सर्वथा जीर्णस्तर्हि तं निपात्य पुनर्भूमिकारचनमारभ्य पुनर्निर्माणमिति। इमामेव लौकिकीं सरणिमाश्रित्य भगवान्बुद्धः कर्ममार्गं निनाशयिषतिस्म। एवं च बुद्धवचस्सु संश्रद्दधानास्सर्वेऽपि नराः श्रुतितदुदितकर्मपराङ्मुखा यदाऽऽसंस्तदा धर्मस्य सर्वात्मना नाशाद्भीता देवाः शरणागतवत्सलम् उमासहायं शरणमगच्छन्।

स च भक्तपराधीनः संसारमार्गे परिभ्रमतः जीवविशेषाननुद्दिधीर्षुः देवानां च हितमाचिचरिषन्धर्मं च रिरक्षिषन् शङ्करभगवत्पादात्मनावातारीत्। पूर्वमेव धर्ममार्गप्रतिष्ठित्यै स्वात्मजं कार्तिकेयं कुमारिलभट्टात्मनाऽवातारयच्च। सर्वत्र सनातनं पन्थानं प्रतिष्ठाप्य वेदविरुद्धवादिनो बौद्धकापालिकाञ्जित्वा शास्त्रार्थं प्रकाशयन्बौद्धमतं नामावशेषं चकार भगवान्सदाशिवः।

नैतावता शङ्करस्य वैष्णवमते विष्णौ वा प्रद्वेषः कल्पनीयः। यतो हि भागवतादिमहापुराणैरिदमवगच्छामो विष्णुभक्तः शिव इति—तथाचोक्तं भागवते द्वादशस्कन्धे—

> निम्नगानां यथा गङ्गा देवानामच्युतो यथा।
> वैष्णवानां यथा शम्भुः पुराणानामिदं तथा॥ इति॥

सनातनमतावलम्बिनामस्माकं मतिरेषैव यत् हरिहर चतुर्मुखेषु न कश्चन भेदः। सर्वेऽपि समानशक्तयः समानरूपाः। कार्य विशेषमवलम्ब्यैवोच्चावचभेदो

जायते इति । तथा चोक्तं कविकुलतिलकेन सनातन मार्ग मनुसरता कालिदासेन स्वकीये कुमारसम्भवे--

एकैव मूर्तिर्बिभिदे त्रिधा सा सामान्यमेषां प्रथमावरत्वम् ।
विष्णोर्हरस्तस्य हरिः कदाचिद्वेधास्तयोस्तावपि धातुराद्यौ ॥ इति ॥

न हि पुराणेष्वितिहासेषु वा शिवो वा विष्णुर्वा परस्परं द्विष्टः । यत्रापि द्वेष इव प्रतिभाति तत्रापि मूलान्वेषणे क्रियमाणे द्वेषाभास एव । अतएव तत्र तत्र स्मर्यते "भेदकृत्पापकृद्भवेदिति ।

यदि प्रकृते बुद्धं खण्डयन्शङ्करो द्वेष्टीति प्रतिपाद्यते तर्हि स्वेनैव प्रतिष्ठापितं धर्ममार्गं खण्डयन्बुद्धः किमितिनात्मानं द्वेष्टि । कृष्णावतरादनन्तरं हि बुद्धावतारः । यथा तत्र कालोचितं पन्थानमाश्रित्य विरोधपरिहारः परिचीर्णितः तथैव बुद्धशङ्करयोरपि विरोधपरिहारं कुर्यात् । इति ।

## 'कालिदासशेक्सपियरयोस्सृष्टिभेदः"

( प० राममूर्ति त्रिपाठी का० हि० वि० वि० )

'काव्यं हि खलु समुत्कर्तकं मनुसंततिसमुन्नियंन्त्रारकीय वृत्तोनाम्' इति सुष्ठु संगिरन्ते काव्यमर्मविदः । तथाहि दिवानिशं सत्यानृतरागद्वेषशीतोष्णसुखदुःखभावाभावधर्माधर्माद्यनेकविधपरस्परप्रतिद्वन्द्विपदार्थसार्थपरिपूरितेऽस्मिंल्लोके ताः रागद्वेषपरिणामीभूताः । काव्यन्तु रागद्वेषयोः कारणीभूतयोरमितप्रमातृभावं निरासं निरासं हृदयंनिष्ठसङ्कीर्णतां समुत्कृत्य विभुत्वमुद्भावयति । एवं जनेषु वैबुधवृत्तेः समुदयो विगतसंशयकः । इत्थञ्च काव्यंसाधनमेव । एतेन Art for arts sake ( कला कलायै ) इति संभणन्तः 'संघातपरार्थत्वात्' इति साङ्ख्यभावनाभावितचेतसाम् उक्तमनाकलयन्तः पाश्चात्या अपि परास्ताः ।

कविरूकसाध्यसिद्ध्यै जनान् स्वकाव्यसृष्टिं नयति । सा [illegible]ष्टिः द्विधा दृष्टिपथमापतति, उपदिशति च—

(१ दानवीयचरितमयी चेत् परिणामे दुःखसंदोहं समुत्पाद्य तथाविधाचरणान्निवर्तयति लोकम् । (२) वैबुधचरितमयी च भूत्वा पार्यन्तिकस्वर्गीयसुखावसानकतया तथाविधाचरणे प्रवर्तयति । शेक्सपियरमहोदयैः पूर्वोक्तां सरणिमुररीकृत्य स्वसृष्टिर्निरमायि । कालिदासकविवर्यैस्तु परोक्तां रीतिमाश्रित्य । काव्यरूपसृष्टिसर्जकः कविः स्वरुच्यनुकूलं तान्निबध्नाति । रुचिस्तु जातीयसंस्काराधीतिपरिस्थित्यादिभिः संघटिताभवति । एवमेकत्रभूमौव्यवहारस्य महत्ता नोररीक्रियते; प्रत्युत तत्परः कश्चिदादर्शोऽन्यः, अपरत्र व्यवहार व सर्वम् । अतएवै केन आदर्शमयी सृष्टिः विधीयतेऽपरेण यदस्ति तदेव विधीयते । एकेन सत्वप्रयुक्त कार्यं ततोऽपि समुज्ज्वलीकृत्य लोक आवर्जितमनाः क्रियते अपरेण रजस्तमोगुणप्रभव कार्याणि ततोऽप्युग्रीकृत्य वर्ण्यन्ते ।

पूर्वैतरेषान्तावत्काव्य सृष्टिर्दानवीया। तथाहि नाट्यानि सर्वाणि दुःखावसानकानि । तन्निष्पत्त्यै सांसृतिकजन-सुलभकाम-क्रोधमदलोभादिविकारातिग्रस्तक्रूरचेतसां नारकीयपात्राणां हृदयविदारकक्रूरतमकृतिकलापतज्जन्यदुःखराशीनामुपनिबन्धः। संसृतौ खलु स्वयमेव रजस्तमसोरतिदारुणः परिणामः। ते तु ततोऽप्युग्रीकृत्य समुद्दङ्कयन्ति। "लेडी मैकवेथ, लार्डमैकवेथ" 'उथैलो; इयागो" "रोमियो, जूलियट" 'ब्रूटस, 'रिचर्ड" प्रभृतयः विगलितकारुण्यान्तःकरणास्तत्सृष्टे रूपकरणीभूताः संवृत्ताः। अपि च भणितं हि तावत् शिलगल महोदयैः "लेडी मैकवैथनाम्नी नायिका तादृशभीरुनारीजनप्रतिकूलनिरतिशयसाहसप्रतारकतानृशंसताघातुकताकरम्बितचेतस्का दानवीदेशीया। उक्तं हि खलु तयैकत्र 'पालितो हि यः खलु मत्स्तन्येन तस्यापि शिरश्चूर्णीकरणेऽहं शक्ता' पूतनया किमन्यत्कृतम्?

रिचर्डमहोदयैः सुष्ठूक्तम्—

'यदा प्रकृतिदेव्यैव वयं विकलाङ्गीकृताः, तदा कृतावपि आसुरीयभावशबलितमनस्काः संभवितुमर्हाः इत्यत्र नास्ति संदेहशीकरः।

न केवलं शेक्सपियरमहोदयैरेव स्वकृतिकदम्बे समुद्ग्रथितमेवमपि तु मिल्टनमहाशयैरपि 'पैराडाइजलॉष्ट' महाकाव्ये भीषणतमा पैशाचिकी मूर्तिरुपस्थापिता। भवत्येव हि पापकाव्यसंवलित सृष्टिरेवमेव।

आर्यैस्तु विपरीतकाष्ठामेवैभ्यः प्रस्थितम्। तेषां सृष्टिः सत्त्वपरिणामीभूता किं वा ततोऽपि हृदयावर्जिका। सन्ति यद्यप्यत्रापि दशवदनकंसजरासंधकल्पाः किंच त एव राक्षसप्रकृतिकाः, न ते मानवस्तरं स्प्रष्टुं शक्ताः। निपातिताश्च सत्वगुणसमुद्भासितचरितवद्भिः सम्यक्। नायकास्तु देवसुलभसत्याहिंसापरोपकृति प्रभृतिनिर्गतमलगुणवारि समुद्वेलमानसाः सृष्टि साधनतयोपात्ताः॥ अतएवैषां सृष्टि र्वैबुधी। एते हि चरितनायकाः स्वाचरणेन न केवलं मानवेषु प्राप्यदासुरप्रकृतिमेव छिन्दन्ति, प्रत्युत नैतिकतां परमोच्चत्याग-भावनां समुत्पाद्य तान् जनान् देवकोटिमाटीकयितुम् शक्ता इत्यलम् चर्चया।

# हिन्दूकोडबिलः (विधेयकः)

[ प्रो० हंसराज अग्रवाल एम० ए०, बी० ई० एस०, अध्यक्ष संस्कृतविभाग,
गवर्नमैंट कालेज़ लुध्याना ]

( हिन्दूकोडनामकमालेखमधिकृत्य भारतीयसंसदः शरत्कालीनेऽधिवेशने विचारो वादश्च सञ्जातः। परमेश्वरस्यानुग्रहात्, श्रीस्वामि करपात्रमहोदयां भगीरथप्रयत्नमयात् देशव्यापिप्रबलविरोधात्, श्रीदेवनायकाचार्यप्रभृतिविद्वद्वर्गसहायकसम्वलितानां श्रीगोविन्दमालवीयप्रमुखानां बहूनां सदस्यानां सदसि सबलविरोधाच्च अधुना तदुपरि विचारः स्थगितः। यद्यपि स्थगने समयाभावः कारणमुक्तम्। परं मतग्रहणलोभमूलकं राजनीतिपटूनां महाजनानां तत्र पाटवमेव प्रधानं कारणमिति विश्वसिमि। प्रोक्तालेखस्य सामान्यपरिचयाय अधस्तनो लेखनकलानिपुणस्य लेखकस्य लेखः पाठकेभ्यः प्रदीयते।

अग्रे चैतत् विचारयिष्यते यत् भारतीयदृष्टिकोणेन सम्पत्तिः का। परिणयश्च कीदृक् किमुद्देश्यकः। किञ्च स्त्रीणां तत्र महत्त्वमित्यादि। सम्पादकः)

हिन्दूकोडविले हिन्दूधर्मस्य हिन्दूसमाजस्य च प्रायः सर्वे एव व्यवहारा आचाराश्च विवेचिताः। स्मृतीनामेवेदं कलियुगीयम् एकं प्रतिरूपम् इति युज्यते वक्तुम्। अत्र प्राधान्येन नार्याः जीवन्तं भर्तारं विहाय पत्यन्तरगमनम्, विधवायाः सम्पत्तौ अधिकारः, बहुविवाहो नराणाम्- नार्याः स्वपितुः सम्पत्तौ अधिकारः, दत्तकदायः, इत्यादयः पारिवारिकाः सामाजिकाश्च अन्ये विषयाः सन्निवेशिताः। एतेषां विस्तृतं विवेचनं नियमनिर्धारणञ्च कृतम्। एवम् अयं विलः स्मृतिशास्त्राणां दायभाग-विवाह-प्रकरणोक्तान् नियमान् विशिष्य स्वैरतया परिवर्त्तयितुम् इव उद्यतः।

गुणाः—भारते धर्मस्य समाजस्य च वर्तमानां दशाम् अनुचिन्त्य 'विले' अस्मिन् निर्दिष्टाः केऽपि युक्तिगर्भाः संशोधनकराः विचाराः गुणपक्षम् आश्रयन्ते। ते च—

(१) पुरुषः एकपत्नीव्रतः स्यात्।
(२) विधवायाः सम्पत्तौ अधिकारः
(३) दत्तक सम्बधिनो विविधाः विषयाः।

एवम् अत्र दृश्यते पुरुषाः सत्याम् अपि जायायां दारान्तरग्रहणं कुर्वन्तः उपरतायां पूर्वायां भार्यायां पुनर्दारहरणं रचयन्तः न नाम निग्राह्याः भवन्ति। ते हि विविधाभिः पीडाभिः स्वभार्याः दुःखाकुर्वन्ति। किं नैषा स्वैरकारिता तेषाम्? अनेनैव स्वभर्तॄणां दुर्व्यवहारेण पतिपरायणाः बह्वयः नार्यः आत्महत्यां कुर्वते। बह्वयः अपराः आततायिनां हस्तेषु पतन्ति स्वधर्मम् अपि जहति। नराणाम् एष स्वच्छन्दाचारः न नाम निग्रहम् अर्हति किम्? इयं तु जीवद्भर्तृकाणां दशा। अथ मृतभर्तृकाणां दशा ततोऽपि भृशं शोचनीया। यस्याः पतिरेव एकं शरणम् सा मृते भर्तरि निःसहायावस्थां प्राप्नोति। ज्ञातयश्च एतां सम्पत्तिम् आजिहीर्षवः कदर्थयन्ति मारयन्ति च। इदम् अनेकधा दृष्टचरम्। कदाचन अनपत्या विधवा स्वपितृकुलाद् अन्यस्माद् वा गोत्राद् दत्तकं जिघृक्षति परं ज्ञातिभिः नानुमन्यते 'स्वभर्तृगोत्राद् एव दत्तकं गृहाण' इति वाग्भिः। सोऽयं तावद् गृध्नूनां तेषां कदर्थनापटीयान् निर्बन्धपूर्णः दुर्व्यवहारः क्षते क्षार-निपातः इव दुःखाकरोति वराकीम्।

दोषाः—अस्मिन् 'विले' तावद् दोषाः अपि सन्ति बहवः। तान् इह निर्दिशामः।

आलोचनाचतुरा आमनन्ति यद् अत्र हिन्दूसंस्कृतेः सुरक्षायाः नास्ति विचारः। अस्य 'विलस्य' निर्मातारः सर्वे एव पाश्चात्य सभ्यतायां दक्षाः भारतीय संस्कृत्यनभिज्ञाः। अत्र सन्ति मुख्याः दोषा इमे—

(क) नरः स्वजायां पत्यन्तरं गन्तुम् ईहमानां त्यक्तुं क्षमः। अयं च परित्यागः तदैव भवितुम् अर्हति यदा—

(१) उभयोरेकतरस्य क्लीवत्वं शंक्यते,

(२) उभयोः एकतरस्य च दुर्वृत्तत्वम्,

(३) पतिः पत्नी वा स्वधर्मं परित्यजेत्,

(४) दम्पत्योरेकः दुःसाध्यैरुन्मादादिभिर्गदैः ग्रस्तो भवेत् इति ईदृशी दशा समापतेत्। किञ्च सूक्ष्मेक्षिकया निरीक्षमाणानां प्रेक्षावतां नेदमतितिरोहितं यदनेन न स्याद् इष्टसाधनं वनितानाम्, अपि तु अनिष्टसाधनमेव। तथा हि बन्धननिर्मुक्तः पुरुषः कपटेन छलेन कैतवकौशलेन च स्वभार्याम् सापराधां प्रमाणीकृत्य जह्यात्। स्वमनोऽभिप्रेतां काञ्चन अपरां कलत्रत्वेन च स्वीकुर्यात्। विषेण अन्येन केनापि अतिगूढेन पापेन वा जाया पतिं पतिर्वा पत्नीं व्यापादयेत्। यथा स्वभर्तारं सर्वस्वं मन्यमाना भारतीया नारी नरो वा स्वीयां कुटुम्बिनीं गृहदेवताम् इव समाद्रियमाणो दृश्यते तदासौ भारतीयसंस्कृत्याः प्राणमयीभावना शनैः शनैः लोपं गमिष्यति। पतित्यक्ता नारी हिन्दूसमाजे न स्वाभिजनाद्यनुरूपं द्वितीयं वरं सुखेन प्राप्स्यति। तदा च इहापि पाश्चात्यदेशवद् विवाहः इति एषा संज्ञा विधानपत्रेषु एवं स्थानं लप्स्यते। दाम्पत्यजीवनस्य अत्र प्रेममयी सहानुभूतिमयी च भावना नङ्क्ष्यति। सत्याम् एव शरीरशक्तौ सति एव वा विभवे पुरुषं स्वभार्या उपचरिष्यति। सत्येव शरीर-लावण्ये तारुण्ये वा नारीं पुरुषोऽपि उपचरिष्यति। पलिक्नीनां दुर्बलानां दरिद्राणां रुग्णानां वा दैवमेव शरणं तदा स्यात्।

## ( ख ) दुहितृभ्यो दायप्रदानम्

अनेनापि नारीणां लाभः अल्पीयान् हानिस्तु महीयसी। तथाहि—

(१) यदि स्वपितृकुलात् सम्पत्तिम् आहरिष्यति अपि नारी, स्वभर्तृकुलात् अपि तया स्व-ननान्द्रे देयः स्यात् सम्पत्तिभागः पत्युः।

(२) पतिसदने निवसन्ती नारी दूरे स्थिता स्वपितृसम्पत्तिं प्रबन्धयितुं नानायासेन क्षमा। सा च अल्पमूल्येन एव पितृपैतामहिकं दायं विक्रीय न तेन प्रचुरं लाभं प्राप्नुयात्। अनेन शनैः शनैः हिन्दूसमाजः रङ्कोऽपि सम्भविष्यति। यवन-समाजस्य दारिद्र्यस्य बलवान् हेतुः अयमपि एको, यत्ते स्वदुहितृभ्यो दायं ददति। गुर्जरमुम्बापुरी-प्रान्तयोः निवसन्तः मोमीन-खोजाजातीयाः यवनाः मिताक्षरा विधानम् अनुसरन्ति। ते हि समृद्धतमाः यवनानां, पारम्परीणं च तेषु आढ्यत्वं तिष्ठति। अन्ये विरलाः एव ते यवनाः त्रिपुरुषाद् अधिकं येषु आढ्यत्वं तिष्ठेत्।

(३) भ्रातृभगिन्योः सहजः स्नेहोऽपि विलयं यास्यति। तयोः मिथः कलहः द्वेषोऽभियोगाश्च प्रचलिष्यन्ति।

(४) अथापि अयमपर अधिदोषः स्यात्—पितृसम्पत्तिमतीम् एव कन्यां वरीतुं सर्वे कामयेरन्। पितृसम्पत्तिरहिताः स्वानुरूपान् वरान् अपि न लभेरन्। या पितुरेकमेवापत्यं स्यात् ताम् अभ्रातृमतीम् अभगिनिकामेव कन्यकां कलत्रत्वेन ग्रहीतुं सर्वे विचेष्यन्ति। सोऽयं विवाहो महार्घप्रथाभाराभिभूते हिन्दूसमाजे स्पष्टं गण्डस्य उपरि पिडक एव भविष्यति।

जनतायां कोलाहलः हिन्दूकोडविलस्य समस्ते भारते नरै नारीभिश्च विरोधः प्रदर्शितः। अनेन हिन्दूजनानां समाजे महान् कोलाहलः सञ्जातः। भारतस्य समग्रकोणेभ्यः दिल्ल्यां शासनाधिकारिणः तारपत्रैः अन्यैश्च पत्रैः प्रार्थिताः अशेषैरेव समाजधर्म सभा-सदस्यैः। कतिपयेषु जनसम्मर्दस्य निर्गमोऽपि अभूत्। अथ च अस्य पक्षं समर्थयन्त्यः विरला एव दृश्यन्ते नार्यः नराश्च तादृशः। सप्तोत्तरद्विसहस्रवैक्रमे माघे दिल्ल्यां येषु दिवसेषु राज्यसंसदि हिन्दूकोडविलम् अधिकृत्य वादोऽचलत्, तेष्वेव दिवसेषु तत्र राज्यसंसद्-भवनस्य द्वारे विरोध पक्षमाश्रितानां च समर्थनं पक्षेऽवस्थितानां च संघट्टमयो महान् कोलाहलोऽभूत्। विरोधवादिनस्तु अमुं 'हिन्दूकुष्ठ (कोढ़) विल' इति संज्ञया व्यवहरन्ति।

# आत्मानं विद्धि

[ ले० नवलकिशोर विद्या-प्रधानाध्यापक चन्द्रकेतु शर्मा त्रिपाठी ]

अयि गीर्वाणवाणीप्रणयिनो ऽध्यापकान्तेवासिनिवहाः! संप्रति विस्फार्य चक्षुषी अन्तर्मुखीं शेमुषीं चोद्घाट्य निभालयन्तु भवन्तः आसंसृतेरस्मत्सर्वस्वभूताया मातुरिव वात्सल्येनाद्यावधि नास्माकमेवापितु पितृपितामहप्रपितामहादीनामपि जीवनवृत्तिषु सदाचारपरंपरासु निरालस्येनानवरतं संरक्षणतत्परायाः परास्याः क्रतुभुजां गिरः कीदृशी परिक्षीणा दशेति। विद्याविनयविशालैरपि हन्त कदर्थंतैरस्माभिर्मातरमिमामीदृशीमवस्थामितां म्रियमाणां पश्यद्भिरपि सर्वथोदास्यते चेत् कथं वयं साधुसमाजे वदनं दर्शयितुं पारयाम इति क्षणं विचारयन्तु।

संप्रति यत्किञ्चिद्विमृश्य यत्नोदूयुज्यते ऽस्माभिस्तद्दिनानुदरंभरीनस्मान् धिक् धिक् चास्मन्मानुषत्व चातुर्यं विद्याचणत्वं च। भारतस्वातन्त्र्य-लाभेनैतदुत्कर्षचिन्तनं तु खलतासुमनो-विकाससदृशं न चेत् किमन्यत्। यतः खलु सर्वे एव लब्धोत्कर्षाः परमपदस्थाः शासितारः पाश्चात्यशिक्षादिक्षायामाशैशवाल्लग्नाः पाश्चात्यमया नास्मद्धर्मं मर्मकर्म विद्याव्यवस्थावेत्तारः, अत एव चाज्ञानानैरेभिर्नाशालवोऽपि संस्कृतभाषोन्नतेः स्वप्नेऽपि कार्यः!

कस्यापि गुणानभिज्ञेन केन कथं किमप्यार्द्रियेतेति नादृष्टचरं नापरोक्षं भवतां विदुषाम्। अपि चास्मद्धर्मविरोधिहिन्दूविधेयक गोवधावहिष्कारादि

प्रचालनबद्धपरिकरास्ते स्पर्शास्पर्शभक्ष्याभक्ष्य-वर्णव्यवस्थादिकमुन्नतिविरोधीति मन्यमानाः प्रत्यहं प्रवचनैः समाचारपत्रैरस्य सर्वस्य श्रौतस्मार्त प्रपञ्चस्य समूल-ध्वंसाय यतमानाः कथङ्कारं तदुज्जीवनीमिमां भाषां पल्लवयितुंप्रयतिष्यन्ते इति कथंञ्चिद्भवन्तो यदि वद्धाशा नाद्य जानन्ति तथापि नेदीयानेव स कालो यदा ज्ञास्यन्ति।

प्रत्यहं प्रधानमन्त्रिणो ऽस्माकं श्रीमाननीयनेहरूमहोदया रूसंग्लैण्डाम-रीकानिवासिनामाचारव्यवहारपरम्परां निदर्शयन्तो ऽस्मानपि तदनुगामिनो भवितुं प्रेरयन्ति। श्लाघन्ते च तेषां दैनन्दिनभुक्तिपथं त्यक्तभक्ष्यस्पर्शास्पर्शादि-दुराग्रहाणाम्। स्वात्मनि प्रयुज्यमानं पण्डितपदमपि येषां सोढु मक्षमं ते पण्डित-नामधारिणामस्माकं पाण्डित्यमूलभूतां भाषां कथं पल्लवयितुं चेष्टिष्यन्ते इति नितरां मूढोऽपि केवलं देशकालाभिज्ञो विजानाति किमुत पण्डितो न।

हिन्दूमहासभादिकं न सामान्यदृष्ट्यापि वीक्षितुं ते क्षमन्ते यतो ऽत्र हिन्दूशब्दो वर्तते। धर्मनिरपेक्षराज्यप्रचालयितारश्च तत्र भवन्तः, संस्कृत-भाषा च धर्मप्राणभूतेति षट्त्रिंशतोरिव राज्यपाल-स्वभावसंस्कृतभाषापरिरक्षण-योर्विषयः। अत एव च हिन्दुस्तानीपक्षोऽगत्या राष्ट्रभाषाविचारे तेषां तच्चि-न्तितैंग्लिशभाषायां बहुमत्या बहिष्कृतायामन्तिम आसीन्नतु कथमपि शुद्ध-हिन्द्याम्।

स चायं नैषां दोषः किन्तु संस्काराणामेव। बाल्याद् यादृशसंगतेर्यादृशः संस्कारः भाषायाश्च प्रभावो भवति नस यावज्जीवं मार्जयितुं शक्यः। किमन्यथा कारणं यत्तेषां विचारा नास्मभ्यं रोचन्ते नास्माकं तेभ्यः। उक्तञ्च 'यन्नवे भाजने लग्नः संस्कारो नान्यथाभवेत्' न केवलं सांप्रतिकानां भारतीयता-पराङ्मुखतैव अपि तु संरक्षणादि व्यवहारेऽपि सर्वथाऽसफलता तेषाम्। दृढतरसंस्काराश्च न प्रयत्नसहस्रैरपि परिवर्तितुं शक्याः। कोऽन्यथा नाम लब्धावसरोऽपि आत्मानं भारतीयं मन्यमानो भारतीयाचार-व्यवहार-विचापराङ्मुखो भवेत्।

संप्रति हि वयं कांग्रेसीयानां शासने पर्य्याप्तस्य तु कथैव दूरेऽपास्ता एकवारमप्युदरपूरं भोजनमाच्छादयितुमंगं वासोऽपि न लभेमहि। भ्रष्टाचारश्च दैनंदिनो वर्धत एव। तथापि भाविनि जनमतसंचयने पुनरपि तैरेव भवितुं यत्यते सत्यमेवोक्तम् 'ज्ञातास्वादो विवृतजघनां को विहातुं समर्थः' प्रतार्य्यन्ते च वितण्डावादैर्जनाः। आत्मनोऽतिरिक्तान् बुद्धिमत एव न ते मन्यते कथयन्ति च कारागारादिकष्टसहने नान्ये तदा आसन् सम्प्रति चास्मत्प्रयत्नलब्धराज्ये शासकै-र्भवितुं बहुभिरिष्यते तदस्माकं पुरोऽन्ये नार्हा इति—

यदि सत्यमपरित्यज्य विचारयन्तु ते तर्हि न तेषामेव केवलं प्रयत्नफलं स्वराज्यम्। अपि तु समस्त जनतासाहाय्यस्यैव, परन्तु जनता कीदृशे दुःखोदधौ मग्ना कीदृशं चैषां सौख्यम् इति भुक्तभोगिन्यः प्रजा एव जानन्ति। स्पष्टन्तु जनताजीवनेन लब्धसत्ताका एते संप्रति क्रीडन्ति। न चैतन् न्याय्यम् यदेत-त्साहाय्यलब्धराजस्य यावद्भारत मेत एव शासका यथाकथंचित् स्युर्नान्ये।

यस्याः प्रजाया धनजनसाहाय्यमवाप्य स्वराज्यं लब्धं तद्रक्षणं कियत् क्रियते इति नाविदितं सर्वेषाम्। तथापि प्रवचनै रद्यापि नन्दनवनान्येव प्रदर्श्यन्ते। नवनवा योजनाश्चाग्रे क्रियन्ते। न च लाभप्रदं सुखशान्तिमयं किमपि क्रियात्मकं कार्यं दृष्टम्।

तथैव संस्कृत विषयेऽपि भवद्भिर्विचारणीयम्। विभज्यमाने भारते धन जनक्षतिः कियती जाता इति विमर्शं विमर्शं कस्य न सहृदयस्य चेतो विदरीदरीति तथापि शान्त्यैव स्वराज्यं लब्धमिति ते जल्पन्ति। तेषाम् मन्ये प्रस्तरमयान्यन्तःकरणानि परदुःखानभिज्ञानि स्वार्थं मयानि एव, कथमन्यथा ते नाद्यापि पूर्वीयवंगालस्य दशां पश्यन्ति ललनानां चीत्कार गंभीरभयंकराम्।

कियन्न दुःखमस्माकं सुरभारतीतिरस्कारे इतिवयमेव जानीमहे तदद्य किं विधेयमिति विचार्यं कस्मै चिद्रचनात्मकक्रियाकृत्यै सर्वैः सन्नद्धै र्भाव्यम्। न चैतेलेखैः किमपि कार्यं सेत्स्यतीति यत्र चास्माकमेकमति र्जायतां तथा विचारार्थमस्त्यावश्यकता कस्या अपि परिषदः। सा कुत्राप्यस्तु, यत्र तत्रभवतां सर्वं महतां मनोऽस्यो रोचेत। छात्राश्चापि तत्र संघटिता भवेयुः। यदि नाम शासकास्तत्र निर्णीत मस्मद्विचारं नोररी कुर्युः किमिति (गवर्नमेण्ट) शासन परीक्षयास्माकम् अस्मच्छात्रप्रदत्तैरेवरुप्यकैः निरीक्षक राजेष्ट्रिक (रजिष्टार) प्रभृतयोऽनेके यथेच्छचेतन भुजोऽस्या भाषायाः कृते किमुपकुर्वते इति कदाचिद्भवन्तो विचारयन्ति।

वयमेव परीक्षका उत्तारकाः प्राश्निकास्तथापि स्वहस्तेनैव सर्वं परस्मै समर्प्य रात्रिन्दिवं शोचामः। इयं मूढता केषाम् यदि नाम तमेव द्रव्यकोषं संस्कृतोन्नत्यै नियुञ्जमहे स्वतन्त्राः कति न महाविद्यालयाः संचलेयुः। अस्तु च स्वतन्त्रा संस्कृतपरिषदः परीक्षा। किञ्च पश्यन्तु प्रसह्य प्रवेशितैः हिन्दीग्रन्थैः शास्त्रिपरीक्षान्ते वासिनां को लाभो भवति कियती वा ज्ञानोन्नतिः? प्रेमचन्द्रादीनां गल्पाः केवल मुपहासायैव न चेत् किमर्थाः? अहह महाघोरपङ्के निमग्ना सुरभारती तथापि न वयं पश्यामः स्वयमेवानुप्रवेशयानुमोदयामः स्वयमेव स्वपादे कुठाराघातं विधायोच्चैश्चीत्कुर्मः रक्षत!! रक्षत!!! इति।

अधुनापीग्लिशभाषैव नरीनृत्यते शासकानां हृदयप्राङ्गणेषु नाचास्या मोहोऽपयाति गतेष्वपि तदुपासकेषु गौरण्डेषु। नहि गुरण्डानां सर्वथा भारता द्बहिष्कारो मन्तव्यो यावत् तेषां भाषात्र तिष्ठति शत्रूणामङ्करोपि भयङ्करो भवति। तेषामिन्द्रजालमद्यापि शिर आक्रम्य भारतीयशासकानामुपरि स्वप्रभावादच्युतत्वं द्योतयति।

तच्छीघ्रमेव यावदस्त्यवसरो यतन्तां भवन्तो विद्वांसः। संप्रति अस्यां सुरगिरि किमपि फलमसमीक्ष्य अनेकैरन्तेवासिभिरेषा परित्यक्ता, त्यज्यते चानुदिनम्। यत्रविद्यालयेषु सततं पञ्चाशत् पञ्चाशत् छात्रा आसन् संप्रति षोडश पंचदश वा सन्ति। अन्येषु तु पञ्चषा एवेति दर्शं दर्शं मन्यामहे यद्येवैवोदासीनता विदुषां समर्थानामपि हृदि कृतसंकेता स्थास्यति तदा कतिपयैरेवाहोभि र्वर्षैर्वा नामाप्यस्या भाषायाः अस्तं गमिष्यति इति।

## "कुतस्तु रत्नाकर एतु सुकाशीम्"

[ रचयिता—पं० करमलकर शास्त्री षड्दर्शन तीर्थः इन्दौर म० भा० ]

१

गेहस्य भूषणमथात्मसखीमसात्यम्
रुष्टां कुतश्चिदथ मानवतीं स्वकान्ताम् ।
कान्तो यथा व्रजति सान्त्वयितुं, स्वगंङ्गा
रत्नाकरो जयपुरान्नु तथैत्सुकाशीम्

२

श्वश्रूः स्वकीयनिलये प्रतिदीपपकालं
जामातरं ह्वयति कौतुकमस्य कर्तुम्
सोऽप्येति मङ्क्षु च यथाऽतुलभक्ष्यमत्तुं
रत्नाकरो जयपुरान्नु तथैत्सुकाशीम्

३

युद्धस्थले चिरतरं विहरन् स्वशत्रून्
जित्वाऽत्र लब्धयशसा भुवि दीप्यमानः
वीराग्रणीर्व्रजति सूच्चपदं यथाऽमुं
रत्नाकरो जयपुरान्नु तथैत्सुकाशीम्

४

देशान्तरे सततदीर्घसमुद्यमेन
चातुर्यतः समुपलभ्य सुरत्नराशीन्
देष्टुं प्रगृह्य गृहिणीं सुवणिग् यथैति
रत्नाकरो जयपुरान्नु तथैत्सुकाशीम्

५

स्थित्वा गुरोः सदसि भास्करहायनानि
चाधीत्य वेदमखिलं सुविनीत-शिष्यः
स्वीयालयं स्वपितरौ प्रणमन् यथैति
रत्नाकरो जयपुरान्नु तथैत्सुकाशीम्

६

अदाँस्त्रयोदश वने कथमप्यतीत्य
भोक्तुं स्वराज्यमुदमाशु च पाण्डवास्ते

४

याता यथा। सुखखनिं निजराजधानीं
रत्नाकरो जयपुरान्नु तथैत्सुकाशीम्
७

रत्नां निशम्य निजमातृगृहं प्रपन्नां
यस्तां विना प्रतिकूलं हृदि दूयमानः
क्षिप्रं यथा गृहमगा तुलसीसुदासः
रत्नाकरो जयपुरान्नु तथैत्सुकाशीम्
८

सन्त्यज्य सद्मपशुपुत्रकलत्रभृत्यान्
तेभ्यः प्रदाय सकलं चिरसञ्चितं स्वम्
काशीं मुमुक्षुरयते हि यथा विरक्तः
रत्नाकरो जयपुरान्नु तथैत्सुकाशीम्

## समस्या पूर्तिः

[ पूरयिता—श्री० अ० ति० सिङ्गराचार्यः
कुमारः श्रीवेङ्कटतातदेशिकाचार्यस्य ]

दुखानुगं सुखमिह क्षणभङ्गुरञ्च,
दारिद्र्यसौहृदवती तरला च लक्ष्मीः ।
ज्योत्स्ना तमस्सहचरी चपला च, चित्रं
किं वात्र लौकिकदशापरिभावकानाम् ।।
तरुणतरतमालश्यामलात्मप्रभाभिः,
हरिमणिमयमारात्कुर्वती विश्वमेतत् ।
तडिदुपचितलक्ष्मीः कृष्टिसक्षेत्रलेखां,
कलयति हि रसार्द्रा "काऽपि कादम्बिनीयम् ।।
उपनिषदुपक्रम्याऽच वात्स्यायनीयात्,
सुललितमखिलाथानात्मना दर्शयन्ती ।
जयति हि वहुधैकाऽऽराधयित्री जनाना—
मपिविविध-रुचीनां 'देवविद्यानवद्या' ।।

# मातृस्तवनम्

( ले० पण्डितश्रीमहानन्द ठाकुरः, न्या० वे० न्या० सा० आचार्यः
प्रधानाध्यापकः जय भारत साधुमहाविद्यालयः, हरिद्वारम् )

कृपा-पारावारा स्मरहरसहाया गिरिसुता,
नवीना हारोशा नवजलधराकार-ललना ।
सुधा-धारा-सारैः सुरवरनुता मां त्रिनयना,
सदा पायादव्याद् भवतरण-कारुण्य-तरणिः ॥ १ ॥

सदा स्मेरा चारु गुह-करिवरास्य-प्रसविनी,
रमावाणीभ्यां या परम रमणीया वरतनुः ।
अवाप्ता सौभाग्यं सकलरमणी दुर्लभमियं,
हरत्वेषा तापाञ् शरद-मृत-धाम द्युतिमुखी ॥ २ ॥

तवालम्बादम्बा हमिह नहि कुर्वे च सुकृतं,
रमे श्यामे, रामाधररसमधौ धिक्कृतसुधे ।
भवाब्धौ, भ्राम्यन्तं सकल-कलुषस्यास्पदमिम-
मतो मात र्नो मां परिहर पुरारित्रिनयने ॥ ३ ॥

अहं मातस्तावन्निखिल-सुरवृन्दै र्भुवि नृभिः
परित्यक्तः पापी सकलविषयासङ्गविमतः ।
त्यजेस्त्वं मां ज्ञात्वा पतित इतिकारुण्यभरिते,
किमाधिक्यं ते स्यात्सकल-सुरवैशिष्ट्यजनकम् ॥ ४ ॥

स्फुरन्तीयं वैधी मम खलु ललाटेऽतिविषमा
लिपिस्तस्याः केऽन्येऽन्यथयितुमहो सन्ति गिरिजे ॥
समर्था मातस्त्वं मयि यदि कृपां नैव कुरुषे,
निरालम्बो लम्बोदरजननि कं यामि शरणम् ॥ ५ ॥

अये मातः किं तेऽधिकमिह निगाद्यं त्रिनयने,
दयादृष्टि र्देया मयि विषयसक्ते हतहृदि ।
जगन्मध्येऽहं ते सुत इति कृपां त्वं त्यजसिचे,
जगन्मातृत्वं ते त्रिफल मुपयास्यत्यगसुते ॥ ६ ॥ इति ॥

# "प्रतिमेघदूतम्"

( कवयिता, जगन्नाथपाठकः विद्यार्थी, का० हि० वि० वि० )

पत्युःपाणौ गमनसमये चित्रकूटे स्वकीयान्
साक्षात् प्राणान्प्रकटविरहा प्रेषयन्तीव देहात् ।
संस्मृत्यर्थं विनिहितवती सा यमुत्तार्य तूर्णं
किं तत्रस्थः कनकवलयो मेघ ! दृष्टस्त्वया सः ॥ ९ ॥

दूतो येन त्वमिह जलद ! प्रोषितस्स प्रियो मे
रामस्याद्रौ प्रतिनिवसत स्तस्य चैवास्मि पत्नी ।
यत्र प्राप्तो वसतिरलका नाम यक्षेश्वराणां
यन्निर्भूतं प्रतिरवमवाप्नोषि मार्दङ्गिकं तत् ॥ १० ॥

आस्तामन्यत्, पतिरतिशयं प्रस्थितेन त्वयाऽद्रे-
रत्रानीतः कथय न कथं मां पयोद ! प्रवित्सुः ।
नो चेत्त्वत्र स्मृतमिति सखे प्रापय प्रेयसोऽन्ते
शीघ्रं गत्वा स्वयमहमनुप्स्यामि तं चित्रकूटे ॥ ११ ॥

नो चेदित्थं जलधर ! निवर्तस्व पत्युः प्रदेशे
मत्सन्देशं कथय वचसा तत्र गत्वा ममैव ।
आशाबन्धं हृदयमनिशं सा कथञ्चिद्दधाना
वाष्पत्यागं कथयति सखे प्रेयसी सप्रणामा ॥ १२ ॥

मामत्रैव प्रथमसमयप्राप्त योगप्ररोहा-
मेकालम्बां पुरि विरहिणीं स्थापयन् प्रेषयँस्त्वाम् ।
भर्तुश्शापो विटपिनमितो नीतवान कुत्रचित् तं
चित्तप्रीतिं व्रततिमधुनैकाश्रयां सन्निपात्य ॥ १३ ॥

तेनाक्षतः । कुसुमनिकरप्रापणायातिशीघ्रं
गच्छन् मार्गे त्वमहह !!! तदारुद्ध आसीर्मयैव ।
जातस्तस्मादतिशयमहो ! स्वाधिकारात् प्रमत्तो
मत्तो येन प्रतिनिवससि प्रीतिमान् दूरदेशे ॥ १४ ॥

[ शेषः २९ पृष्ठे द्रष्टव्यः ]

## सैनिक-गीतम्

[ प्रबन्धा—श्रीवासुदेव द्विवेदी ]
( "क़दम क़दम बढ़ाये जा" इति रागेण गीयते )

सादरं समीयताम्,
वन्दना विधीयताम्,
श्रद्धया स्वमातृभू-समर्चना विधीयताम् ॥ १ ॥
प्राणदायिनी इयम्,
त्राणदायिनी इयम्,
शक्ति-भुक्ति-मुक्तिदा-
सुधाऽनपायिनी इयम्।
ध्यानमत्र दीयताम्, शक्तिरत्र नीयताम्।
साभिमानमेतदीय—गौरवं सुगीयताम् ॥ २ ॥
सादरं समीयताम्..........
आपदो भवन्तु वा,
विद्युतो लसन्तु वा,
आयुधानि भूरिशोऽपि-
मस्तके पतन्तु वा।
धीरता न हीयताम्, वीरता विधीयताम्।
निर्भयेण चेतसा, पदं पुरो निधीयताम् ॥ ३ ॥
सादरं समीयताम्..........

---

[ २८ पृष्ठस्य शेषांशः ]

अन्तश्शल्यं किमपि हृदये बिभ्रती त्वद्वियोगात्
तद्वैकल्यादनिमिषमहं जाग्रती निश्यशान्ता।
ज्ञात्वाऽतीतं क्षणमपि सदा कल्पकल्पं स्मरन्ती
व्यत्येमि त्वां कथमपि सखे दूयमाना दिनानि ॥१५॥
प्राणेश त्वं भृशतरमितो दूरसंस्थोऽसिगत्या
वैहायस्या कथमपि गताऽस्मि त्वदङ्के सुषुप्सुः।
हा मे धात्रा प्रतिफलिधिया पक्षतिर्नैव दत्ता
दुर्दैवानामतिशयतरं सर्वमप्राप्यमेव ॥१६॥ इति ॥

# प्राधानिकम्

## सरलता

संस्कृतमतिकठिनम् । अतिप्राचीनं हि तत् । तत्र वर्णिता बहवः पदार्था न परिचीयन्ते । देशा, ग्रामा, नद्यः, पर्वता, वृक्षाः पक्षिणः, पशवः, जलजन्तवः, धान्यानि दैनिकानि गृहवस्तूनि च यानि वर्ण्यन्ते तेषु भूयांसि विशेषशब्देनैव बोध्यन्ते । नचेदं व्यावहारिकं येन प्रकरणादिवशादपि परिचयः संभवेत् । न वा इदं कस्यापि मातृभाषणम् । व्याकरणम् अस्य परिज्ञानमूलं तत् अतीव दुष्प्रवेशम् । त्रीणि वचनानि, सप्त विभक्तयो, दश लकारा, अनन्ताः प्रत्ययाः, सहस्राणि धातवः एतस्य महतीं दुर्बोधतां जनयन्ति । तत्रापि दुरूहाः पाणिनेः सूत्ररचना, ततो वार्तिकानि, ततो भाष्यं, ततः परिभाषाः नियमाश्च भीषणतासृष्टिं कुर्वन्ति । यावदायुः अधीतिनोऽपि स्खलन्ति । यदि पाणिनिरपि असाधून् प्रयोगान् करोति तदा का कथा परेषां मानवतासुलभदौर्बल्यानाम् । नव्यन्यायः, नव्यं व्याकरणं च कठिनेषु मूर्धन्यम् । कथं सरलतासंपादनीया ? ।

अत्र केचित् कथयन्ति—सन्धिः परित्यज्यताम् । विभागेन शब्दप्रयोगे सुबोधता अवश्यं भवेत् । सर्वत्र—समासे वा व्यासे वा—सन्धिर्न कार्यः । अनुस्वारप्रयोगः एकः कार्यः, न क्वचित् परसवर्णः न वा मकारः । एतावतापि ईषद् सरलता तु संपद्येत । भाषावृद्धिः कार्या । मोहत्यागः साधुः । सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः । एवं यण-वृद्धि-गुण-दीर्घ जिह्वामूलीयेत्यादि किमपि न कार्यम् इत्यादि ।

अपरे भाषन्ते—दशलकारेषु एको वैदिकः । तेषामपि चत्वार एव विधेयाः । वर्त्तमाने लट्, भविष्ये लृट्, भूते लङ्, आज्ञायां लिङ् । अन्ये परिहार्याः सङ्गे अलंकारा इव कामिन्याः । लुङ् लकारस्य तु चर्चापि अमाङ्गलिकी तदीयरूपाणाम् अत्यन्तं कठिनत्वाद् दुरुच्चार्यत्वाच्च । आत्मनेपदपरस्मैपदव्यवस्थापि सादरं नमस्करणीया, यथाक्रमं धातुप्रयोगान् कुरुत । भ्वादिगणः, चुरादिगणः, तुदादिगणश्च पर्याप्ताः । यादिभ्यो रुधादिभ्य दत्तजलाञ्जलयो भवत । उपगणेषु सुलभाः सुगमाश्च ग्राह्याः । यङ्लुगन्ताश्च दुष्टमतङ्गजा इव दूरतोऽपि न उपसर्पणीयाः, एवं प्रभृति ।

अन्ये सङ्गिरन्ते—एकवचन-द्विवचने एव व्यवहारं चालयितुं समर्थे खद्दरास्वरमिव आधुनिकानाम् । द्विवचनस्य किं प्रयोजनम् । कारकबन्धनान्यपि शिथिलानि विधेयानि तारुण्ये तरुणीनां कञ्चुक्य इव । लघुकौमुदीकारकनियमाः किं न पर्याप्ताः ? समासाश्च परिहरणीया एव, द्वित्राणामेव वा पदानां कर्त्तव्याः । इमे दृष्टान्ताः ।

प्रमुखा वदन्ति—परीक्षाभारा बहुलाः संपादनीयाः । इंग्लिश-हिन्दी-गणित-भूगोल इतिहास-विज्ञान-नागरिकशास्त्र-प्रभृतयो विषया इङ्गलिशविद्यालयवत् सर्वे निवेश्याः । अन्यथा भृत्यासु प्रवेशो न संभवति । संस्कृत-महाकायग्रन्था अपि पूर्ववद् रक्षणीयाः, इतरथा ते पुस्तकालयशोभार्थमेव भवेयुः । एवं सति भूयोभाराक्रान्ता विद्यार्थिनः पाठशालाप्रवर्त्तक लोभसंभृताः परीक्षकाश्च परीक्षाणां दानेन समुत्तारणेन च परस्परं सहयोगेन स्वयमेव सरलतां जनयेयुः वेतसानां कुब्जतां सरितां प्रवाहा इव । इति सरणिः ।

मनीषिणः संमन्यन्ते—अभ्युदयः केषां न स्पृहणीयः । 'श्रेयसि केन तृप्यते' । संस्कृतभाषा अत्यर्थं प्रसरतु । विद्वद्भाषा, राजभाषा राष्ट्रभाषा वा भवतु । विश्वं भूषयतु वा ।

पण्डितस्तर्हि संसार इत्याभणन् भवभूतिः सत्यवाक् प्रसीदतु। किमितोऽधिकं प्रमोदस्थानं भारतीयानाम्। अपि तु इदं वक्तुमवशिष्यत एव। 'अवसाययितुं क्षमाः सुखं न विधेयेषु विशेषसम्पदः'। यथा-देववाणी तादृग् रूपं न परिवर्त्तयेत् येनासौ असुरवाणी स्यात्। एतदीया सर्वे एव आकरग्रन्थाः पुरातत्त्वस्य विषयतां व्रजेयुः। वाल्मीकि-व्यास-कालिदास-भवभूतिप्रभृतयो नाममात्रेणापि न शिष्टतां समासादयेयुः। ग्रन्थग्रन्थयो रज्जुग्रन्थय इव पानीयेन दुर्विमोका एव तिष्ठेयुः। आरम्भावस्थायां यः कोऽपि उपायः क्रियताम्। पूर्वोक्तो वा नूतनो वा। 'उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः'। प्रथमं शब्दा अभ्यस्यन्तां, क्रियारूपाणि कण्ठे क्रियन्ताम्, काव्यानि पठ्यन्ताम्, भाषणे लेखने च प्रौढिः अनुष्ठीयतां, पश्चात् शास्त्रप्रवेश उपादीयताम्। परन्तु प्रवेशे संपन्ने सर्वे नियमा यथावद् रक्षणीया एव। फलकिसलयप्रसूनसंभारशोभनस्य उपवनस्य परिरक्षणार्थं कण्टकवृतिमन्तरा कोऽभ्युपायः। स्वातन्त्र्यविकसितस्य संपत्तिसमृद्धिपरिपूर्णस्य स्वदेशस्य गुप्तये भूयोभूयांसं सैनिकव्ययभारं नीतिविद आयतिं पश्यन्तः संविदधत एव। अन्ततः हिन्दूकोडविधेयकं चिराय सुप्तये समुत्सृष्टमेव। तदर्थं के धर्मनियमा अपरिमिता न सह्यन्ते। एवं पाण्डित्यस्य वास्तविकस्य संजननार्थं महतो महतोऽतिविशालतमस्य कस्यचिद् दुरूहस्य इतरस्यातिमनोहरतमस्यापि आर्यजाते गौरवावहस्य संस्कृतिसभ्यतानिधानस्य उच्चैशिरःसंपादनस्य संस्कृतग्रन्थराशेः सर्वतः सर्वथा दृढसंरक्षणाय परिवर्धनाय संमानाय च सर्वाणि व्याकरणानि, नव्यन्यायाः, साहित्यसौहित्यानि, दर्शनानि, ज्यौतिषिकाणि भैषज्यानि च यथावद् रक्षणीयानि। परीक्षासु च नूतना विषयाः कामं निवेश्यन्ताम्। व्यावहारिकता विदुषां नितरामपेक्षिता। किन्तु प्रगाढसूक्ष्मवैदुष्यसंपादनार्थं काचन परीक्षापदवी अन्यादृशी निर्मीयताम्। प्रशासकैः संस्कृतस्य समुन्नतिं तत्र तत्र चर्चद्भिः महाविद्यालयेषु तदर्थं विशिष्टा वृत्तयश्छात्राणाम् अध्यापनापदानिच समर्हाणि अध्यापकानां समनुष्ठेयानि। प्रशासका एव इदानीमिदं निर्मातुं प्रभवन्ति। मनीषिणोऽपि अत्र सम्यक् सहयुञ्जीरन्। तपोदानं महीयोऽत्र तपस्विनो विदधीरन्। तथापि मुख्यो भारः प्रशासकानां शिरःसु समापततीति पुनः पुनरभिदध्महे। अत्र भर्तृहरिः—

> शास्त्रोपस्कृतशब्दसुन्दरगिरः शिष्यप्रदेयागमा
> विख्याताः कवयो वसन्ति विषये यस्य प्रभोर्निर्धनाः।
> तज्जाड्यं वसुधाधिपस्य, कवयो र्थं विनापीश्वराः
> कुत्स्याः स्युः कुपरीक्षका हि मणयो यैरर्घतः पतिताः ॥ इति।

## हिन्दूकोडविधेयकं—

चिराय महानिद्रायां गतमिति समाचारः भारते समुदयन् सुधांशुबिम्ब इव कस्य धार्मिकसज्जनस्य कस्या वा पातिव्रत्यपरायाः मनो न प्रहर्षयति। एतेन सनातनधर्मः, आर्यजातिसमृद्धिः, कन्यानां भ्रातृसौहार्दं, कुटुम्बसंघटना, अतिप्राक्तनी परम्परा, वर्णा आश्रमाश्च संरक्षिता इति सर्वशक्तिमते अघटितघटनापटीयसे अकारणकरुणाय करुणावरुणालयाय

श्रीविश्वनाथाय भूयो भूयोहार्दिकाः प्रणिपाताः । वस्तुतः भारतं भारतं संपन्नमिति ततः तपोमूर्त्तये त्यागिमूर्धन्याय विदुषां शिरोमणये आमूलचूलं देशं जागरितवते विश्वविदितमहिम्ने श्री १००८ करपात्र महोदयाय साक्षात् श्रीशङ्करभगवत्पादाय परस्मै भूयांसि नमांसि सादरं समुपाहरामः । तदनु अत्र विपुलं पराक्रमते वदतां वराय श्रीश्यामाप्रसादमुखर्जीमहाशयाय वाग्मिनां कुलतिलकाय धर्मैकपक्षप्रवणाय श्रीपण्डितप्रवरगोविन्दमालवीयाय मुहुर्मुहुः साधुवादान् वितरन्तो न तृप्तिं श्रयामहे । अपरे चैतदर्थं ये महात्मानः तनुं विसृज्य कीर्त्तिमूर्त्या ध्रियन्ते तेभ्यः सादरं श्रद्धाञ्जलिं समर्पयामः । विद्वद्भ्यः, धर्मवीरेभ्यः परःसहस्रेभ्यः, माननीयाभ्यो महिलाभ्यः धनिकेभ्यः, राजकीयेभ्यः ये यथात्र हिन्दूकोडविध्वंसने सत्प्रयत्नं व्यतरन् तेभ्यः सर्वेभ्यः शतशः धन्यवादान् दद्मः । कामये च सर्वान् सादरं प्राणिपत्य यत् ते सर्वे सर्वदा सर्वथा संघटन्तां संनह्यन्तां यथा धर्मविध्वांसिनां पुनः साहसमेव ईदृशे कुकृत्ये न प्रादुर्भवेत् । सर्वदैव धर्मस्य विजयः, देशस्य च मङ्गलं दैनंदिनं वर्धेत ।

## वृत्तम्

### प्राच्यविद्यासम्मेलनम्

रत्नाकरस्य गतेष्वङ्केषु चर्चितमिदं सम्मेलनम् । सदस्यास्चास्य प्रायः निखिलभारतीयविश्वविद्यालयीयाँग्लविभागस्य प्राच्यविद्याप्रतिनिधय एव । भारतस्य कस्मिंश्चिद्विशिष्टे नगरे अस्य वार्षिकमधिवेशनं भवति । अस्मिन् वर्षे लखनऊनगरे अक्टूबरमासस्य प्रथमसप्ताहे अस्याधिवेशनमभूत् । एतस्य आरम्भिके भाषणे उत्तरप्रदेशीयप्रधानमन्त्रिमहोदया जनतायाः सांस्कृतिकविकासस्य आवश्यकतामूचिरे । श्रीनेहरूमहोदया स्वकीये सन्देशे कथितवन्तः—"शिक्षाव्यवस्थायां संस्कृतम् उचितं स्थानं लभेत्" । अस्य अध्यक्षपदमलङ्कृतवन्तः मद्रासप्रान्तीय श्रीनीलकन्ठशास्त्रिमहोदयाः । ते च स्वकीये अध्यक्षीयभाषणे उक्तवन्तो यत् अस्माभिर्भारतीयैः स्वसंस्कृतिमूलज्ञानाय, स्वकीय प्राचीनपरम्परापरिज्ञानाय च संस्कृताध्ययनं नितान्तमावश्यकम् । अतः शिक्षाव्यवस्थायां संस्कृतमुचितं स्थानं यथा लभेत् तथा प्रयतितव्यम् ।

### शुभारम्भः

गतसितम्बरमासस्य २४ तिथौ कानपुरस्थ-सनातनधर्ममहाविद्यालये आचार्यश्रीनरेन्द्रदेव महोदयाः स्थानीयसंस्कृतसाहित्यपरिषद उद्घाटनं कृतवन्तः । स्वीये महत्वमये गम्भीरे भाषणे उक्तवन्तश्च यत् स्वतन्त्रे भारते एका भारतीया अनुसन्धानशालाशासकैः संस्थापनीया यत्र विदेशीया विद्वांसो अनुसन्धानार्थमागच्छेयुः ।

तत्र च निर्वाचिता अधिकारिणः—

अध्यक्षः—प्रा० सत्यनारायणपाण्डेयः, एम० ए० संस्कृतविभागाध्यक्षः ।
उपाध्यक्षः—प्रा० रामसुरेशत्रिपाठी, साहित्यव्याकरणाचार्यः, एम० ए० ।
" " —" विश्वनाथगौड़ः, शास्त्री, एम० ए० ।
प्रधानमन्त्री—श्रीरसिकविहारीशास्त्री, एम० ए० (अन्तिमवर्षीयः)
उपमन्त्री—"श्रीविन्ध्येश्वरीप्रसादशुक्लः, बी० ए० (अन्तिमवर्षीयः)
" " —"विश्वनाथत्रिपाठी, बी० ए० (प्रथमवर्षीयः)
कोषाध्यक्षः— कान्तिकिशोरभरतिया, एम० ए० (अन्तिमवर्षीयः)
अन्ये च पञ्च कार्यकारिणीसदस्याः निर्वाचिताः ।

# संस्कृत परिषद्

आश्विन मासस्य प्रथम सप्ताहे काशीस्थ सन्यासिसंस्कृतमहाविद्यालये वाराणसेय युवक संस्कृतज्ञानामेकं सम्मेलनमभूत्। यत्र प्रतिदिनं ह्रसन्त्याः संस्कृतविद्यायाः पुनरुद्धाराय संस्कृतज्ञानां सुदृढ़ संघटनाय च सर्वे सदस्याः प्रतिज्ञामकुर्वन्। एतदुद्देश्यपूर्तये च संस्कृतपरिषद् नाम संघटनं निर्ममिरे! यस्याध्यक्षपदं सूर्योदय सम्पादकाः **श्रीविन्ध्येश्वरी प्रसाद शास्त्रिणः** अलमकुर्वन्। प्रधानमन्त्री च **श्रीधारादत्त गौड़** महोदयो निर्वाचितः। परिषदश्चास्याः पञ्चदश अन्ये कार्यकारिणी सदस्या निर्वाचिताः, प्रतिपक्षञ्चास्या अधिवेशनं भवितेति सदस्यानां निर्णयः।

# सौहार्दसम्बन्धः

अखिल भारतीय संस्कृतसाहित्यसम्मेलनस्य अध्यक्षाणां म० म० श्रीगिरिधरशर्म चतुर्वेद महाभागानां "निवेदनम्" अनुरुध्य निम्नलिखिताः संस्थाः एकतासम्पादनाय सम्मेलनेन सम्बन्धकरणाय ऐच्छन्, आभिश्च विधानतः सम्बन्धसम्पादनाय पत्रव्यवहारः प्रचलति।

१. श्री विद्वत् (पण्डित) परिषद् (अयोध्या)

२. जनपद संस्कृत सम्मेलनम् (गोरखपुर)

३. संस्कृत शिक्षा प्रसार परिषद्, (मौरावाँ, उन्नाव)

# अभिनवाः सम्मेलन शाखाः—

१ स्थानीयसंस्कृतसाहित्यसम्मेलनम्, (बवाई, खेतड़ी, राजस्थानम्

२ ,, ,, श्रीरमा वैकुण्ठ सं० महाविद्यालय (पुस्करराज, अजमेर)

३ ,, ,, श्रीप्रेमशङ्कर मिश्र महोदयः (३११, हरिपुरा, इटारसी,)

४ ,, ,, श्रीशिवशरणशर्मा, भैरमपुर, (थरियाँव, फतेहपुर)

# संस्कृतरत्नाकरस्य नियमाः ।

१. पत्रमिदमखिलभारतीय संस्कृतसाहित्यसम्मेलनस्य मुखपत्ररूपेण प्रतिचान्द्रमासे अन्तिमे सप्ताहे प्रकाश्यते । यैर्ग्राहकैरागामिचान्द्रमासस्य पञ्चदशदिवसं यावत् पत्रं न लभ्येत तैस्तस्मिन् मास एव स्वकीयप्रेष्यकार्यालये ( पोष्ट आफिस में ) अन्वेषणानन्तरं रत्नाकरकार्यालये पत्रं संप्रेष्य कारणं मृग्यम् । मासान्तरे कस्यापि अभियोगो नावधेयः स्यात् ।

२. संस्कृतसाहित्यसम्मेलनस्य संरक्षकेभ्यः सहायकेभ्यः विशिष्टसदस्येभ्यः साधारण सदस्येभ्यश्च पत्रमिदं विना मूल्येन वितीर्यते ।

३. ये प्रत्यब्दं दशरूप्यकेभ्योऽनल्पं साहाय्यं विदधीरन् तेऽस्य पत्रस्य सहायका मन्येरन्, नामानि च तेषां सहायकरूपेण पत्रे प्रकाश्येरन् ।

४. ग्राहकैः पत्रव्यवहारे स्वीया ग्राहकसंख्याऽवश्यं लेख्या, अन्यथोत्तरप्राप्तौ विलम्बो जायेत । परिवर्तनपत्राणां, निबन्धानाञ्च प्रेषणम्, निखिलः पत्रव्यवहारश्च "व्यवस्थापकः, संस्कृतरत्नाकरकार्यालयः, भद्रवनी, काशी, इति संकेतेन विधेयः" ।

## प्रचारकाणां कृते सौविध्यम्

संस्कृतरत्नाकरस्य प्रचाराय सर्वत्र प्रचारका अपेक्ष्यन्ते । ते च रत्नाकरशुल्कचतुर्थांशार्धभागिनो भवेयुः ।

ते चात्र द्विविधाः सम्मताः—
१—प्रकीर्णवितरकाः
२—स्थायिग्राहकनिर्मातारः,

विशेषज्ञानाय कार्यालयेन सह पत्रव्यवहारो विधेयः ।

तत्र भवतां पाठकमहाभागानां सेवासु रत्नाकरः विगतपञ्चमासेभ्यः समुपसर्पति । जानन्त्येव तत्र भवन्तः संस्कृतपत्राणामार्थिकीं स्थितिम् । ये पाठकाः अद्यावधि मूल्यं नैव प्रेषितवन्तस्तेऽति शीघ्रमेव मूल्यं प्रेषयेयुः अन्यथा षष्ठोऽङ्को वी. पी. द्वारा प्रेषयिष्यते यस्मिन् द्वयोरप्यावयोरनावश्यको व्ययो भविष्यति । आशासे रत्नाकरपाठकाः उपेक्षां परित्यज्य सुरसरस्वतीसेवानिमित्तमिति कृत्वा क्षिप्रमेव धनादेशं प्रेषयेयुरिति ।

व्यवस्थापकः

मुद्रक—श्री विक्रम पञ्चाङ्ग प्रेस, भदैनी, बनारस ।

* श्रीः *

संस्कृतसाहित्यसम्मेलनस्य

मासिकं मुखपत्रम्

# संस्कृतरत्नाकरः

चूडापीडकपालसंकुलगलन्मन्दाकिनीवारयो-
विद्युत्प्रायललाटलोचनशिखिज्वालाविमिश्रत्विषः ॥
पान्तु त्वामकठोरकेतकशिखासंदिग्धमुग्धेन्दवो-
भूतेशस्य भुजङ्गवल्लिवलयस्रङ्नद्धजूटा जटाः ॥१॥

प्रधानसम्पादकः—

सर्वतन्त्रस्वतन्त्रः पं० महादेवपाण्डेयः कवितार्किकचक्रवर्ती

सहसम्पादकः—

आचार्यरघुराजमिश्रः एम्० ए०

व्यवस्थापकः—

आचार्यः पं० नागेशोपाध्यायः एम०ए०

श्रीकाशीविश्वनाथपाठशालाध्यक्षः ।

काशी, भाद्रपदः १५,२००८ वि०

षोडशवर्षस्य चतुर्थोऽङ्कः

१ प्रतेः मूल्यम् ।=)

षाण्मासिकम् २॥)

वार्षिकम् ४)

# विषय-सूची



## लेखकानां कृते नियमाः

सम्मेलनमिदं तन्मुखपत्रभूतं "संस्कृतरत्नाकरः" पत्रञ्च विशुद्धं साहितीयम्। अत्र हि निर्दिष्टविषयेषु लेखा अपेक्ष्यन्ते—

(१) परिचयात्मकाः—(क) ग्रन्थपरिचयात्मकाः
(ख) पदार्थपरिचयात्मकाः
(ग) ग्रन्थकारपरिचयात्मका वा

(२) आलोचनात्मकाः-(क) सामाजिकाः—संघटनप्रोत्साहनकराः गुणदोषविवेचनपराः
(ख) शिक्षासम्बन्धिनः
(ग) मनोविनोदिन्यः कथाः
(घ) दार्शनिकाः, साहितीयाः, ज्योतिर्विज्ञानसम्बन्धिनः, आयुर्विज्ञानादिसम्बन्धिप्रभृतयः

(३) विद्वच्चरितम्—अप्रतिमप्रतिभाशालिनां पूर्वेषां वर्तमानानां वा विदुषां जीवनवृत्तम्

(४) लेखकमहोदयैः स्वकीयो लेखः पत्रस्य एकस्मिन्नेव भागे सुस्पष्टाक्षरैर्विलिख्य प्रेषणीयः।

(५) लेखे आवश्यकं परिवर्तनं संक्षेपणञ्च कर्तुं सम्पादकः प्रभवेत्

(६) अप्रकाशिताः लेखाः प्रापणव्यये प्राप्त एव परावर्त्येरन्।

(७) अतिविस्तृताः विवादपराश्च निबन्धाः नास्मिन्पत्रे स्थानं लभेरन्।

॥ श्रीः ॥

सरस्वती श्रुतिमहती महीयताम्

# संस्कृतरत्नाकरः

यावन्मूर्ध्नि हिमांशुकन्दलभृति स्वर्वाहिनीं धूर्जटे-
र्यावद् वक्षसि कौस्तुभस्तबकिते लक्ष्मीर्मुरद्वेषिणः।
यावच्चित्तभुवस्त्रिलोकविजयप्रौढं धनुः कौसुमं
भूयात्तावदियं कृतिः कृतधियां कर्णावतंसोत्पलम् ॥

प्रधानसम्पादकः—
पण्डितश्रीमहादेवपाण्डेयः

सहसम्पादकः—
आचार्यरघुरामिश्रः एम० ए०

वर्षम् १६ } काशी, भाद्रपूर्णा: १५, २००८ वि० { संख्या ४

## प्राधानिकम्

'वर्षासु रथकार आदधीत' 'निषादस्थपतिं याजयेत्' इत्याद्याः प्रथन्ते श्रुतयः। 'नूनं व्याकरणं कृत्स्नमनेन बहुधा श्रुतम्। बहु व्याहरतानेन न किञ्चिदपशब्दितम्' 'यदिवाचं प्रदास्यामि द्विजातिरिव संस्कृताम्। रावणं मन्यमाना मां सीता भीता भविष्यति, एवमादयो जाग्रति वानरेषु राक्षसेषु रामायण वचोभङ्गयः। धर्मव्याधस्य विभिन्नदेशेभ्यः समुपेत्य समुपस्थितान् प्रतिपित्सून्प्रति वर्णितानि महाभारते विस्मापकान्यवतिष्ठन्ते संस्कृतरहस्यानि। विद्यते महाभाष्ये रथकारेण वैयाकरणस्य घर्षणम्—तथाहि—वैयाकरणः—कोऽस्य रथस्य प्रवेता। सूतः—अहमायुष्मन् अस्य रथस्य प्राजता वैया० अपशब्द एषः। सूतः—प्राप्तिज्ञस्तत्रभवान् देवानां प्रियः, नत्विष्टिज्ञः। इष्यत एतद्रूपं प्राजितेति। वैया० अहो अनेन दुरुतेन बाध्यामहे। सूतः—एषोऽप्यपशब्दः। सुवतेरेव सूतः, न तु वयतेः, यदि कुत्सा प्रयोक्तव्या दुःसूतेनेति वक्तव्यम् इति। वर्त्तते नैषधीयचरिते स्वयंवरं समागतानां नृपतीनां परस्परं संस्कृतगिरा व्याहारवर्णना—'अन्योऽन्यभाषानवबोधभीतेः संस्कृत्रिमाभिर्व्यवहारवत्सु। दिग्भ्यः समेतेषु जनेषु तत्र सौवर्गवर्गो न नरैरचिन्हि ॥' सन्ति नाटकेषु महाकविभिः कर्मतामानीतेषु स्त्रीशूद्रवनेचरादीन्प्रति संस्कृतवाङ्मय्यो व्याहृतयः। स्फुरति पाणिनीयेषु सूत्रेषु लोकमधिकृत्य भाषाशब्दप्रयोगः संस्कृतस्य तदानीन्तनभाष्यमाणताप्रमापकः। विलसन्ति प्राकृतव्याहृतयो देवभाषापदान्यवष्टभ्य प्रकृतित्वेन तानि तानि स्वपदानि संपादयन्त्यः। सार्वजनिकमन्तरा व्यवहारं चतस्रः, चतुर्दश, अष्टादशविद्याः, चतुःषष्टिः कलाः

नूनं न शक्यन्ते संस्कृतसन्दर्भैः संख्यातीतैर्व्यावर्णयितुम्। श्रीभोजराज्ये कुविन्दादीनां संस्कृतानि कविकर्माणि दीव्यन्ति। चकास्ति विज्जका, विकटनितम्बा-कर्णाटराजप्रियाप्रभृतीनां वनिताविदुषीणां नवावखानखानामुखानामना-र्याणामपि संस्कृतकवित्वानि। चत्वारो वर्णा, आश्रमिणः, अन्त्यजाः, स्त्रियः, पुरुषा यदि न सर्वे, प्रभूतप्रभूताः संस्कृतभाषाभाषिणोऽभूवन्। जैना, बौद्धा अपि पश्चाद् हीनयानपथादवतीर्णा महायानमार्गमारोहन्तः संस्कृतमाश्रित्यैव ववृधिरे। एभिः साधनैः पूर्वाङ्कप्रतिपादितैर्युक्त्यन्तरैश्च प्रमाणप्रतिपन्नैरिदं विशदं सिध्यति यदियं सुधाशनसरस्वती आसेतुहि आहिमालयम् आसिन्धु आसागरं समग्रे भारते सहस्राणि शरदः स्थितिं व्यापिकां महार्हामापत्। किमिदानीमेतदर्थमस्माभिः कर्त्तव्यम्। यथा तथा वा भवतु नीयेत वा समय आलस्यपरैः, सुखं सुप्यताम्, भाषान्तरं विद्यान्तरं वा समुपास्यतां वृत्त्यर्थम्। कालः समनुकूलो न भवति। शासकाः प्रतिकूलाः सन्ति। आहोस्वित् समुत्थानायास्या सम्यग् व्यापर्तव्यम्। आर्षमृणं मोक्तव्यम्। इदानीमपि महतां पूर्वजानां रक्तप्रवाहः किमस्मासु शिष्यते ? तर्हि किञ्चिन्निवेद्यते अवधानदानेन कर्णौ विस्फार्य श्रूयताम्। अपेक्षां दीयमानामभ्यर्थये—

संस्था भूयस्य एतदीया अधुनापि समवलम्बमाना इमामेव ध्रियन्ते, अनयैव स्वकीर्त्तिभरं स्थापयन्ति, अत्रैव निद्रान्ति प्रबुध्यन्ते, जातानि जीवन्ति सर्वमैहिकं दि तासाममुष्यामेव पर्याप्नोति। साग्रहं, सबलं, सविनयशतं ता न केवलं प्रणयेऽपितु दृढमनुबध्नामि विबोधये स्वकीयमित्यनुध्याय शृणुत; ध्रुवं विधत्त कारयत च स्वयमपरैश्च, यद् विज्ञापितम् अयमेव कालः कर्त्तव्यस्य, समयः प्रबोधस्य, अवसरः समुत्साहस्य। मान्यमान्या भवन्तः प्रतिजानीत; सर्वं कार्यं संस्कृतेनैवानुष्ठातुम्। अध्ययनाध्यापने संस्कृतेनैव विधेये। नियमावली संस्कृतमयी भवतु। एतत्सम्बन्धिन्यः समितयः संस्कृतैकनिष्ठाः प्रचलन्तु। छात्रगोष्ठ्यः संस्कृतेन विरच्यन्ताम्। पण्डितसभा संस्कृतप्रौढिमप्रसाराय यत्र तत्र सोत्साहैः संघट्यन्ताम्। कवितापाठाः सङ्गीतेन करम्बिता जनतासु सुश्राव्यन्ताम्। अभिनेयानि रूपकाणि समभ्यस्य यथासम्भव प्राक्तनानि नूतनानि वा सम्प्रदर्श्यन्ताम्। निर्लोभैः पुराणानि वाच्यन्ताम्। साधु समभ्यस्तैः वाग्मिभिर्व्याख्यानानि दीयन्ताम्। पाश्चात्या गौराङ्गी भाषा दवीयसी समस्तसंपर्करहितापि दिशानयैव समृद्धा प्रसरन्ती निःसार्यमाणापि परकीयापि हृदयादद्यापि न निर्गच्छति। यथा तथास्ताम् संस्कृतार्थे सर्वं चेष्टितव्यम्। प्रथममयमनुरोधः काशीराजकीयसंस्कृतमहाविद्यालये हिन्दूविश्वविद्यालयीयसंस्कृतमहाविद्यालये वाराणसेयेषु संस्कृतमहाविद्यालयविद्यालयेषु सम्यगुररीकृतः किमित्यन्याभिः प्रान्तान्तरेषु संस्कृतमुपजीवन्तीभिः संस्थाभिः तत्रस्थैरनुरागीभिभिरिदमीयैर्न परिपाल्येत विद्वद्भिरन्तेवासिभिश्च। धन्यधन्यः सोऽयं समयो भूयाद् यत्रायं कर्त्तव्यदुन्दुभिः सोत्साहैर्वाद्येत, ससाहसैः प्रस्थीयेत, सुदृढप्रतिज्ञैः कर्त्तव्यपथो विक्षुद्येत। केवलमन्तिमं निवेदनम्—सैनापत्यं च राज्यं च दण्डनेतृत्वमेव च। सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति॥

# परमाणुकारणवादः श्रीशङ्कराचार्यश्च—

( ले०—श्रीबदरीनाथशुक्लः, काशीहिन्दूविश्वविद्यालये न्यायशास्त्राध्यापकः )

श्रीशङ्कराचार्यो ब्रह्मसूत्रस्य द्वितीयाध्याये द्वितीयपादस्य तृतीयेऽधिकरणे द्वादशं सूत्रं व्याचिख्यासुर्वक्ष्यमाणप्रकारेण परमाणुवादं प्रदर्श्यादूषयत्। तथा हि—"पटादीनि हि लोके सावयवानि द्रव्याणि स्वानुगतैरेव संयोगसचिवैस्तन्त्वादिभिर्द्रव्यैरारभ्यमाणानि दृष्टानि। तत्सामान्येन यावत्किञ्चित्सावयवं तत्सर्वं स्वानुगतैरेव संयोगसचिवैस्तैस्तैर्द्रव्यैरारब्धमिति गम्यते। सचायमवयवावयविविभागो यतो निवर्तते सोऽपकर्षपर्यन्तगतः परमाणुः। सर्वं चेदं जगद्गिरिसमुद्रादिकं सावयवं, सावयवत्वाच्चाद्यन्तवत्। न चाकारणेन कार्येण भवितव्यमित्यतः परमाणवो जगतः कारणमिति कणभुगभिप्रायः। तानीमानि चत्वारि भूतानि भूम्युदकतेजःपवनाख्यानि सावयवान्युपलभ्य चतुर्विधाः परमाणवः परिकल्प्यन्ते, तेषां चापकर्षपर्यन्तगतत्वेन परतो विभागासम्भवाद्विनश्यतां पृथिव्यादीनां परमाणुपर्यन्तो विभागो भवति, स प्रलयकालः। ततः सर्गकाले च वायवीयेष्वणुष्वदृष्टापेक्षं कर्मोत्पद्यते, तत्कर्म स्वाश्रयमणुमण्वन्तरेण संयुनक्ति, ततो द्व्यणुकादिक्रमेण वायुरुत्पद्यते, एवमग्निरेवमाप एवं पृथिवी। एवमेव शरीरं सेन्द्रियमिति। एवं सर्वमिदं जगदणुभ्यः सम्भवति, अणुगतेभ्यश्च रूपादिभ्यो द्व्यणुकादिगतानि रूपादीनि सम्भवन्ति तन्तुपटन्यायेनेति काणादा मन्यन्ते। तत्रेदमभिधीयते—

विभागावस्थानां तावदणूनां संयोगः कर्मापेक्षोऽभ्युपगन्तव्यः, कर्मवतां तन्त्वादीनां संयोगदर्शनात्, कर्मणश्च कार्यत्वान्निमित्तं किमप्यभ्युपगन्तव्यम्। अनभ्युपगमे निमित्ताभावान्नाणुष्वाद्यं कर्म स्यात्, अभ्युपगमेऽपि यदि प्रयत्नोऽभिघातादिर्वा यथादृष्टं किमपि कर्मणो निमित्तमभ्युपगम्येत, तस्यासम्भवान्नाणुष्वाद्यं कर्म स्यात्, न हि तस्यामवस्थायामात्मगुणः प्रयत्नः सम्भवति शरीराभावात्। शरीरप्रतिष्ठे हि मनस्यात्मनः संयोगे सत्यात्मगुणः प्रयत्नो जायते। एतेनाभिघाताद्यपि दृष्टं निमित्तं प्रत्याख्यातव्यम्। सर्गोत्तरकालं हि तत्सर्वं नाद्यस्य कर्मणो निमित्तं सम्भवति। अथादृष्टमाद्यस्य कर्मणो निमित्तमित्युच्येत, तत्पुनरात्मसमवायि वा स्यादणुसमवायि वा। उभयथापि नादृष्टनिमित्तमणुषु कर्मावकल्पेत, अदृष्टस्याचेतनत्वात्। न ह्यचेतनं चेतनेनानधिष्ठितं स्वतन्त्रं प्रवर्तते प्रवर्तयति वेति सांख्यप्रक्रियायामभिहितम्। आत्मनश्चानुत्पन्नचैतन्यस्य तस्यामवस्थायामचेतनत्वात्। आत्मसमवायित्वाभ्युपगमाच्च नादृष्टमणुषु कर्मणो निमित्तं स्यादसम्बन्धात्। अदृष्टवता पुरुषेणास्त्यणूनां सम्बन्ध इतिचेत्, सम्बन्धसातत्यात् प्रवृत्तिसातत्यप्रसङ्गो नियामकान्तराभावात्। तदेवं नियतस्य कस्यचित्कर्मनिमित्तस्याभावान्नाणुष्वाद्यं कर्म स्यात्, कर्माभावात्तन्निबन्धनः संयोगो न स्यात्, संयोगाभावाच्च तन्निबन्धनं द्व्यणुकादि कार्यजातं न स्यात्" इति।

अत्र कणभक्तपक्षेण वयं ब्रूमः—

सर्गारम्भे परमाणुस्थाद्यस्य कर्मणोऽदृष्टजन्यताया अभ्युपगमे न कश्चिद् दोषः, अत एव कणादो मुनिर्वैशेषिकदर्शनस्य पञ्चमाध्याये द्वितीयाह्निके चतुर्दशे सूत्रे स्पष्टमाह "अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनमणूनां मनसश्चाद्यं कर्मादृष्टकारितम्" इति।

अत्र यदाचार्यश्चिन्तयामास "न ह्यचेतनं चेतनेनानधिष्ठितं स्वतन्त्रं प्रवर्तते प्रवर्तयति वेति" तद् युक्तमपि तदीयं साहाय्यं न कर्तुमर्हति। चेतनेनाधिष्ठितस्यैवादृष्टस्याद्याणवकर्मणः कारणत्वस्वीकारात्। कस्तादृशश्चेतन इति चेत्? अधिष्ठेयादृष्टस्याश्रय आत्मैव, स सर्गादौ शरीराभावान्न ज्ञानलक्षणस्य चैतन्यस्याधार इति चेत्, तथापि आत्मत्वलक्षणस्य चैतन्यस्य तदानीमप्यबाधात्, आत्मत्वेनैवान्याधिष्ठानस्वीकारात्; अत एव कमपि कार्यविशेषं भृत्यकर्तव्यतया निर्दिश्य सुप्तस्य ज्ञानहीनस्यापि स्वामिनस्तदीयशयनकालिके तत्कार्यविशेषे निर्दिष्टभृत्याधिष्ठातृतोपपत्तिः।

किञ्च "अचेतनं चेतनेनानधिष्ठितं न प्रवर्तते" इत्यस्यायमेवार्थो वाच्यो यत् "चेतनसहयोगमन्तरेणाचेतनं किमपि न जनयतीति" तत्रेदमपि विचार्यं यत् किं चैतन्यं साक्षाच्चेतनसहकारि व्यापारद्वारा वा? तत्राद्यः पक्षो नैव सम्भवति सर्वकर्मणां क्रमिकेभ्यो ज्ञानेच्छाप्रयत्नेभ्य एव जायमानतया स्वतृतीयक्षणे विनश्वरस्य ज्ञानस्य प्रयत्नकालेऽभावेन कर्मणोऽव्यवहितप्राक्कालेऽसत्त्वात्। तादृशे काले सत एव साक्षात्कारणताया अभ्युपगमात्। द्वितीये पक्षे तु व्यापारस्यैव कार्याव्यवहितपूर्वकालास्तित्वस्यावश्यकतया पूर्वसर्गीयचैतन्यस्यापि सर्गान्तरप्रारम्भकालिकेऽणुकर्मणि निमित्तता नासम्भविनी तदीयव्यापारभूतस्यादृष्टस्य सर्गादौ तत्कर्मणोऽव्यवहितप्राक्क्षणे विजृम्भमाणत्वात्। एवञ्च पूर्वसर्गे चैतन्यभाजां जीवानामेव सर्गाद्यकालिकेऽणुकर्मणि जनयितव्येऽदृष्टसहकारित्वस्य सम्भवेनाचार्यस्य चर्चिता चिन्ता निर्मूलैव।

यदि पुनः "अचेतनं चेतनेनानधिष्ठितं न प्रवर्तते" इत्यस्यायमाशयो वर्ण्येत यच्चैतन्यमदृष्टमद्वारीकृत्यापि सर्वकर्मकारणम्। तथा च सर्गादौ चैतन्यस्य अदृष्टान्यस्य तद्द्वारभूतप्रयत्नादेर्वा व्यतिरेकेण न पारमाणवमाद्यं कर्म निर्वहणार्हमिति। तदपि न हानिकरम्। अतएव सर्वकर्मकर्तुर्नित्यज्ञानेच्छाप्रयत्नास्पदस्य परमात्मन उपासनात्। तादृशः परमात्माऽक्षपादस्यैव न कणादस्येति तु न वक्तव्यं, कस्यापि भाग्यवतो बुद्धौ परिस्फुरितस्य तस्य परमात्मनो निष्पक्षतया सर्वसाहाय्यकरत्वात्। वैशेषिकदर्शने प्रथमाध्यायप्रथमाह्निकस्य "तद्वचनादाम्नायस्य प्रामाण्यम्" इति तृतीयसूत्रेण, द्वितीयाध्यायप्रथमाह्निकस्य। "संज्ञाकर्मत्वस्मद्विशिष्टानां लिङ्गम्" इत्यष्टादशेन सूत्रेण, षष्ठाध्यायप्रथमाह्निकस्य "बुद्धिपूर्वा वाक्यकृतिर्वेदे" इति प्रथमसूत्रेण च कणादेनापि परमेश्वराभ्युपगमस्य, लाभात् तदनुयायिप्रशस्तपादप्रभृतिभिर्बहुशः परमात्मन उपन्यासाच्च।

अदृष्टस्याणवाद्यकर्मनिमित्ततां निराकुर्वताऽऽचार्येण यदुक्तम् "आत्मसमवायित्वाभ्युपगमाच्च नादृष्टमणुषु कर्मणो निमित्तं स्यादसम्बन्धादिति" तन्न संगतम् आत्मसमवेतस्यादृष्टस्य स्वाश्रयसंयोगेनाणुषु सन्निधानात्। सम्बन्धसातत्यात् प्रवृत्तिसातत्यप्रसङ्गादेष मार्गो मलिनतया त्याज्यत्वेन प्रतिपादित आचार्येणेति चेन्नैतदपि निर्मलं वचनं वैशेषिकाभिप्रायोपेक्षामूलकत्वात्। तथा हि न स्वाश्रयसंयोगसामान्येनादृष्टस्य द्व्यणुकारम्भकसंयोगजनके पारमाणवे प्रथमे कर्मणि कारणता किन्तु स्वाश्रयविजातीयसंयोगेन, कारणतावच्छेदकसंसर्गतावच्छेदकीभूतं वैजात्यं च न सर्वेष्वदृष्टाश्रयसंयोगे किन्तु कर्मान्तराव्यवहितपूर्वोत्पन्नसंयोग एव। तादृशसंयोगस्यैकमात्रतया कथं तन्मात्रगतं वैजात्यं स्यादिति तु न सन्देह्यं सर्गादौ युगपन्नानापरमाणुषु द्व्यणुकारम्भकसंयोगजनकक्रियोत्पत्त्यर्थं बहूनामुक्तसंयोगानामङ्गीकारात्। तादृशो विजातीयः संयोगः किंकारणक इति चेत्? प्रलयौपयिकमहाभूतसम्प्लवसंक्षोभलब्धवेगाख्यसंस्कारवशात् परमाणुषूत्पद्यमानस्य परिस्पन्दस्यैव तत्कारणत्वात्, तादृशपरिस्पन्दस्य पूर्वमपि सत्त्वेन तादृशो विजातीयः संयोगो नियतकालात् प्रागपि कथन्न जायत इति न संशयितव्यं परम्पराप्राप्तस्य तादृशसंयोगकारणीभूतस्य कर्मणः पूर्वमसद्भावात्। एवञ्च तादृशसंस्कारमूलकः परमाणुगतः परम्पराप्राप्तः कर्मविशेषोऽदृष्टाश्रयस्य विजातीयं संयोगं परमाणौ जनयति। ऐश्वरेण चैतन्यादिनाऽधिष्ठितञ्चादृष्टं तादृशसंयोगेनाणुसन्निहितं सद् द्व्यणुकारम्भकसंयोगजनिकामण्वाश्रितामाद्यां क्रियां जनयतीत्यभ्युपगमे न कश्चिद् दोष इति।

आत्मपरमाण्वोः संयोग एव न सम्भवत्यात्मनो निरवयवतयाऽवच्छेदकविशेषासम्भवेन तदभावस्य तत्र स्वीकर्तुमशक्यत्वात्। अवच्छेदकं विनापि तत्स्वीकारेऽवच्छेदकभेदमन्तरेणानिष्टस्य विरुद्धधर्मयोरेकत्र समावेशस्यापत्तेः। न चैषा शक्यते स्वीकर्तुमिष्टतया, विभुनात्मना संयुक्तस्य परमाणोर्व्यापकत्वप्रसङ्गात्। इदमप्यविचारितरमणीयम्, परममहत्परिमाणवत्त्वेन सोपाधिकस्यात्मसंयोगाभावशून्यत्वस्य सर्वमूर्तसंयोगित्वरूपव्यापकतायाः साधकत्वासम्भवात्।

एतावता विस्पष्टमेवैतद् यत्सर्गादावदृष्टस्य चेतनेनानधिष्ठानमणुष्वसम्बन्धः सम्बन्धसातत्याधीनस्याणुकर्मसातत्यस्य प्रसङ्गश्च न सन्त्यत आचार्येण पारमाणवप्रथमकर्मानुपपत्तिर्या प्रादर्शि सा वैशेषिकाशयस्यानवधानादेव।

अथाप्याचार्येण प्रदर्शितः परमाण्वोः संयोगानुपपत्तिरूपो दोषोऽस्त्येव, जागरूके च तस्मिन् कणादवर्णितो विश्वोत्पत्तिप्रकारोऽव्यवस्थित एव। एष हि तत्संयोगप्रतिक्षेपी ग्रन्थ आचार्यस्य—

"संयोगश्चाणोरण्वन्तरेण सर्वात्मना वा स्यादेकदेशेन वा। सर्वात्मना चेदुपचयानुपपत्तेरणुमात्रत्वप्रसङ्गो दृष्टविपर्ययप्रसङ्गश्च। प्रदेशवतो द्रव्यस्य प्रदेशवता द्रव्यान्तरेण संयोगस्य दृष्टत्वात्। एकदेशेन चेत्सावयवत्वप्रसङ्गः" इति।

दोषमिमं कणादप्रातिनिध्येनैवनिराकुर्मः—

तथा हि न तावत् परमाण्वोः संयोगः कथितेन पथा विकल्पयितुमर्हस्तादृशस्य विकल्पस्य सावयवसमवेते संयोग एव सम्भवात् । निरवयवयोस्तु व्याप्यवृत्तेरेव संयोगस्याभ्युपगमात् । संयोगत्वावच्छेदेनाव्याप्यवृत्तित्वनियमस्य परमाणुमात्राश्रितसंयोगे कालिकाव्याप्यवृत्तित्वमादायापि निर्वाहात् । सर्वः संयोगः स्वाश्रयसमवायिदेशावच्छिन्नो भवतीति नियमस्तु नास्त्येव, सावयववृत्तिसंयोगत्वस्योपाधित्वात् । यत्र यत्र संयोगे स्वाश्रयसमवायिदेशावच्छिन्नत्वं प्रसिद्धं तत्र सर्वत्र सावयववृत्तिसंयोगत्वस्य सत्त्वेन साध्यव्यापकत्वाद् विवादाध्यासिते परमाणुसंयोगे संयोगत्वरूपसाधनाव्यापकत्वाच्च । संयोगत्वावच्छेदेन स्वाश्रयसमवायिदेशावच्छिन्नत्वनियमस्वीकारे च परमाणुकल्पनाया एवासम्भवात् । तस्माद् यैः परमोदारप्रतिभैः परमाणवोऽभ्युपगम्यन्ते तैर्व्याप्यवृत्तयस्तेषां संयोगाः स्वीक्रियन्त एवेति तदीयाभिप्रायापरिचयप्रभव एव तथोक्तविकल्पावतार इति निर्विवादम् ।

अवयवं विना परमाण्वोः कथं संयोगः ? इति सन्देहोऽपि कार्यकरणभावमर्मानभिज्ञानामेव शक्यसमुन्मेषः, अन्यथा तत्तदवयवावच्छिन्नसंयोगस्य तत्तदवयवातिरिक्तावयवे प्रादुर्भाववारणाय तत्तदवयवावच्छिन्नसंयोगं प्रति तत्तदवयवत्वेन कारणत्वस्य क्लृप्ततयाऽवयवावच्छिन्नसंयोगेऽपेक्षणीयानामप्यवयवानामवयवानवच्छिन्नसंयोगेऽनावश्यकत्वात् कथं किल तादृशी शङ्काऽवसरमासादयेत् । न हि यद् यस्य कार्यतावच्छेदकेनानाक्रान्तं तदुत्पत्तावपि तदीयं समवधानं क्वचिदपेक्षितमीक्षितम् ।

परमाणौ संयोगस्वीकारे सावयव एव संयोगस्य समीक्षिततया सिद्धायाः संयोगे सावयवत्वव्याप्तेर्बलात् संयोगेन परमाणोः सावयवत्वापत्तिरित्यपि न भावनीयं जन्यद्रव्यत्वेन सोपाधितया संयोगवत्त्वस्य सावयवत्वव्याप्यत्वासम्भवात् ।

गुणादाविव परमाणौ निरवयवत्वेन प्रतियोगिव्यधिकरणः संयोगाभावः सेत्स्यतीत्यपि न युक्तम्, अद्रव्यत्वस्योपाधित्वात्, परमाणुकल्पनाया वैयर्थ्यप्रसङ्गभयेन परमाणुग्राहकप्रमाणेन परमाणुसंयोगसिद्ध्या बाधाच्च ।

दैशिकाव्याप्यवृत्तिसंयोगादेव स्थूलारम्भो भुवने व्यलोकीति परमाण्वोर्व्याप्यवृत्तिसंयोगाभ्युपगमे परमाणुतो द्व्यणुकादिक्रमेण स्थूलद्रव्यारम्भो न स्यादित्येषोऽपि संशयो नोज्जीवनं लभते संयोगस्य स्थूलारम्भकतायामव्याप्यवृत्तित्वस्यातन्त्रत्वेन व्याप्यवृत्तिसंयोगस्य क्वचित्तथाभावे बाधकाभावात्, परमाणुसंयोगादस्थूलस्यैव द्व्यणुकस्योत्पत्तिस्वीकारात् । स्थूलस्य त्रसरेणोरारम्भका द्व्यणुकसंयोगाश्चाव्याप्यवृत्तय एव द्व्यणुकानां सावयवत्वात्

अणवोर्व्याप्यवृत्तिसंयोगाङ्गीकारे तयोरेकाणुमात्रतापत्त्या द्व्यणुकमेव न स-

[ शेषः ८ पृष्ठान्ते द्रष्टव्यम् ]

## पाठकानां प्रबोधाय सतामालोचनाय च ।
## वेदान्तसम्मता सृष्टिर्यथामति निरूप्यते ॥

( लेखकः—रघुराजमिश्रः अन्वेषणविभागः, का० हि० वि० वि० )

परत्र परावभास इति, वस्तुनि अवस्त्वारोप इति वा अध्यास लक्षणम् । वस्तु सच्चिदानन्दाद्वयं ब्रह्म, अवस्तु अज्ञानादिसकलजडसमूहः, तच्च अनिर्वचनीयम्, त्रिगुणात्मकं, ज्ञानविरोधि, भावरूपम् । एतद्धि अज्ञानं समष्टि-व्यष्टि-भेदेन द्विधा भवति । द्वयमेवहि कारणशरीरम्, आनन्दमयकोशः, स्थूल-सूक्ष्मप्रपञ्चलयस्थानम् सुषुप्तिदशाकम् । विशुद्धसत्त्वप्राधान्ये समष्टिः, एतदुप-हितं चैतन्यं सर्वज्ञः, सर्वेश्वरः, सर्वनियन्ता, अव्यक्तः, अन्तर्यामी, जगत्कारणम्, ईश्वर इति कथ्यते ।

मलिनसत्त्वप्राधान्ये च व्यष्टिः, एतदुपहितं चैतन्यम् अल्पज्ञः, अनीश्वरः प्राज्ञ इति कथ्यते ।

प्रोक्ताज्ञानस्य आवरणविक्षेपनाम्नी द्वे शक्ती भवतः । एत एवहि सृष्टि कारणम् आवरणशक्त्यवच्छिन्नं चैतन्यं, कर्ता भोक्ता, सुखी, दुःखी, मूढो भवति ।

विक्षेपशक्तिमदज्ञानं हि स्वात्मनात्मनि स्वशक्तया आकाशादिनिखिल प्रपञ्चमुद्भावयति । एवं तमःप्रधानविक्षेप शक्तिमदज्ञानोपहितचैतन्यात् अपञ्चीकृतः आकाशः, आकाशाद् वायुः, वायोरग्निः, अग्नेराप अद्भ्यः पृथिवी उत्पद्यते । एभ्यश्च सप्तदशावयवात्मकानि सूक्ष्मशरीराणि उत्पद्यन्ते ।

तथाहि—आकाशादिगतसात्त्विकांशेभ्यः व्यस्तेभ्यः श्रोत्र-त्वक्-चक्षु-जिह्वा-घ्राणाभिधानि पञ्चज्ञानेन्द्रियाणि उत्पद्यन्ते । मिलितेभ्यश्चैतेभ्यः बुद्धिः ( चित्तम् ) मनः ( अहंकारः ) च उत्पद्यते ।

बुद्धिः ज्ञानेन्द्रियैः सहिता "विज्ञानमयकोषः" इत्यभिधीयते, इयमेव कर्ता भोक्ता परलोकगामी व्यावहारिको जीवः विज्ञानशक्तिमान् कर्तृरूपः ।

मनश्च ज्ञानेन्द्रियैः सहितं "मनोमयकोशः" इच्छाशक्तिमत् करणरूपम् ।

आकाशादिगतरजोंऽशेभ्यो व्यस्तेभ्यः वाक् पाणि-पाद-पायू-पस्थाख्यानि कर्मेन्द्रियाणि, मिलितेभ्यश्च प्राणापानसमानोदानव्यानाख्यं वायुपञ्चकमुत्पद्यते वायुपञ्चकं हि कर्मेन्द्रियैः सहितं प्राणमयकोश" क्रिया शक्तिमत् कार्यरूपम् ।

एतद्धि सूक्ष्मशरीरमपि समष्टिव्यष्टिभेदेन द्विविधम्, उभयमेवहि सूक्ष्म-शरीरं, विज्ञानमनःप्राणमयात्मककोशत्रयात्मकं स्थूलसूक्ष्मप्रपञ्चलयस्थानं स्वप्नदशाकम्, सूक्ष्मशरीरसमष्ट्युपहितं चैतन्यं, सूत्रात्मा, हिरण्यगर्भः, प्राण इत्याख्यायते । व्यष्ट्युपहितं च तैजस इति । एवमाकाशादिगततमोंशेभ्यः मिलितेभ्यः पञ्चीकृतानि आकाशः, वायुः, अग्निः, आपः पृथ्वीति-स्थूल भूतानि उत्पद्यन्ते । एभ्यश्चस्थूलभूतेभ्यः भूरादिचतुर्दश लोकाः तदन्तर्वर्तिचतुर्विध-

शेषः ८ पृष्ठान्ते दृश्यताम् ।

# छात्रान्प्रति ।

युष्मासु यादृशी लक्ष्यत इदानीमुदासीनता संस्कृताध्ययने न तादृशी कदाचिदपि दृष्टपूर्वा। उत्तरप्रदेश एव भारते महत्सुदृढं दुर्गं संस्कृतस्य विशेषतः काशी। तत्र कंचिद् विद्यालयमधिवसन्तः पठन्तः प्रतिदिनं प्रतिवत्सरं परीक्षां ददानाः कथंचिदुत्तरन्तोऽपि कथं कथमपि संलग्ना अध्ययनं साध्वनुतिष्ठथ? व्युत्पत्तिमासादयथ? आर्हन्तीं सम्पादयथ? निषेधात्मकमेवात्रोत्तरं समुदेति। अवसादप्रसङ्ग एव समापतति। अथ कदाचिदभिधीयेत, विद्यान्तरसमुपार्जनमावश्यकम्, भाषान्तराभिज्ञानं कालोपयोगि, कलापरिचयो वृत्तिसाधनम्, राष्ट्रभाषाप्रौढिर्भारतीयताविनाभाविनी, इंग्लिशावबोधो नीतिनैपुण्यम्। क्षणमवधत्त, ईषदाकर्णयत, स्वल्पमपि निशामयत। किं साहित्यदर्पणकारो नासीदष्टादशभाषाभिज्ञः, किं हरविजयकर्ता धनञ्जयो नाभूत् षड्भाषाभ्यासी, किं चन्द्रशेखरो नाभवच्चतुर्दशगिरां पारदृश्वा। किं भवतां पूर्वजा अनल्पे न प्राभूवन् सर्वज्ञाः कतिपये बहुज्ञाः। अन्यत्कुर्वाणा अपि कामं यद्युपेक्षां परिहरेयु, निध्येयुः स्वेष्वेव दृढस्कन्धेषु समर्पणीयं संस्कृतस्यैतं भारं ध्रुवं साधयितुं निखिलं शक्ष्यथ। देवगिरां निधानं भवद्भिरेव रक्षितं रक्षितं भविष्यति॥

---

षष्ठ पृष्ठस्य शेषांशः

सम्भवतीत्यपि न शक्यते सन्देग्धुं निसर्गतो भिन्नयोस्तयोस्संयोगेन वराकैरणुकाणुमात्रीकरणस्य कथमपि सम्भवाभावात्।

दृष्टविपर्ययोद्भावना त्वाचार्यस्य परकीयनयने काणस्य द्वैत्योदयोद्भावनसमाना स्वयन्तेन दृष्टविपरीतस्याद्वैतस्यादरात् व्यावहारिकपारमार्थिकसत्ताशालिनोस्तयोर्विपर्ययो न पीडाप्रद इत्यादिकन्तु स्वसद्मनः कोणे निलीनस्य गानेन समानमानम्।

एवमेवापरेऽप्याचार्योद्भाविताः परमाणुकारणवादीयदोषाः कणादसिद्धान्तसरोवरानवगाहननिबन्धनप्रतिभासा एवेति मन्तव्यम्।

---

सप्तमपृष्ठस्य शेषांश

अरायुजाण्डजोद्भिज्ज-स्वेदजाख्यानि स्थूलशरीराणि, तदुचितान्नपानादि चोत्पद्यते। स्थूलशरीराण्यपि समष्टिव्यष्टिभेदेन द्विविधानि भवंति। उभयमपि अन्नमयकोशः जाग्रदवस्थाकम्। स्थूलशरीरसमष्ट्युपहितं चैतन्यं वैश्वानरः विराट् इति, व्यष्ट्युपहितञ्च विश्व इत्युच्यते

एवं वेदान्तसम्मता सृष्टिप्रक्रिया स्थूलरूपेण पदार्थपरिचयात्मना संक्षेपतो निरूपिता विवेचनात्मिका आलोचना तु अग्रिमे के प्रकाशयिष्यते।

एतत्सृष्टिप्रक्रियाबोधकं चित्रमत्र पाठकानां सुबोधाय मनोरञ्जनाय च दीयते।

( शेषः २९ पृष्ठे द्रष्टव्यः )

# साहितीयम्

## प्रावृट्

( कवयिता-श्रीरतिनाथझाः व्याकरणसाहित्याचार्यः, का० हि० वि० वि० )

सन्तप्तानां त्वमसि शरणं यत् पुरा गीतमेतन्
मन्ये सर्वं तदतिवितथं तापकस्त्वं तु तेषाम् ।
विद्युद्वल्लीस्तवकविशदश्यामलश्रीस्तवैषा
योषाणामप्युरसिजशिखिज्वालनं सन्तनोति ॥ १ ॥

शोषं शोषमशेषवल्गुविटपिव्याकोशवल्लीदलं
व्याकीर्णां रजसा तथा विवसनां भूमिं निदाघो व्यधात् ।
आलक्ष्यैव विलक्षलक्षितमनाः प्रक्षालयन्ती क्षितिं
प्रावृट् श्यामलशाटिकाभिरभितो नव्याभिराभूषयत् ॥ २ ॥

सस्याङ्कुरसमृद्धिवृद्धिसहितो ग्रामीणसीमन्तिनी-
हर्षोत्कर्षपरम्परापरिणतो गीतस्वनो मेदुरः ।
केषां नेह सचेतसां प्रमुदितां स्फीतां विधत्ते चिरं
सत्यं पीनपयोधरप्रणयिनां रागोऽस्ति रागाय नः ॥३॥

गम्भीरस्तनितं प्रकल्प्य ललितं वाद्यं, नवीनोदयं
स्वीकृत्याम्बरविस्तरे विरचितं चन्द्रातपं श्यामलम् ।
वारं वारमुपेतवीक्षणकलां सामाजिकीं चञ्चला-
मुद्वीक्ष्य प्रमदेन नृत्यतितरां द्राङ् नीलकण्ठोऽधुना ॥४॥

जातीकेतकयूथिकामृदुलतालक्ष्म्याः कदम्बश्रियो
नाभूद् यत् कुसुमाकरोऽपि मुदितामाधातुमीशो मनाक् ।
ता लोकोत्तरसौरभव्यतिकरैः सौन्दर्यभूमीश्चिरं
प्रोल्लास्य प्रथयत्यनन्तमहितां प्रावृट् प्रिया प्राणिनाम् ॥५॥

उत्कण्ठातिशयोच्छलत्कलकलापेन कूलङ्कषा
सिन्धुं याति, निषेवते विटपिनं वल्ली मनोज्ञस्मिता ।
सृष्टिः सौमनसी श्रयत्यविकलं द्राग् गन्धवाहं मुदा
शम्पा श्लिष्यति लीलया जलधरं प्राप्ते पयोदोत्सवे ॥ ६ ॥

शेषः षोडशपृष्ठान्ते द्रष्टव्यताम् ।

## "मेघदूतम्"

( निर्माता—जगन्नाथपाठकः 'विद्यार्थी' का० वि० वि० )

यक्षी काचित् स्मरणशरणा प्रोषितप्राणनाथा
भर्तुः शापादतिविरहिणी पूर्णवर्षैकभोग्यात् ।
अष्टौ मासानधिवसुपुरं सा व्यतीत्याप्रसादा
स्वप्रासादं स्खलगति नभश्चुम्बिनं चुम्बतिस्म ॥ १ ॥
प्रासादस्था किमपि विकलीभूतमन्तर्दधाना
कामाक्रान्ता कृशतनुरसात्युष्णनिःश्वासदूना ।
पत्युर्देशादिव निवसतस्तत्र दिश्युत्तरस्या-
मागच्छन्तं मलयपवनैर्नीतमब्दं ददर्श ॥ २ ॥
बन्धुत्यागं मम निवसता चित्रकूटाश्रमेषु
प्रीतेनायं मयि जलधरः प्रेषितः प्रेयसा किम् ।
तत्सन्देशं वदति कथितो मेघदूतो द्रुतं मा-
मित्यूचे सा किमपि हृदये जाग्रदुग्रस्मरार्तिः ॥ ३ ॥
नेत्रैः स्त्रीणां सममपि महीमार्द्रतां प्रापयिष्यन्
भिन्दन् प्राणानसिभिरनिशं कामिनां चञ्चलाभिः ।
किञ्चित्त्रस्यन्नवमृगदृशः काममुत्कण्ठितायास्
तत्र प्रापन्नवजलधरो यत्पत्न्यास्समीपम् ॥ ४ ॥
स्वान्तं जातोज्झिगमिषमिवाश्रुच्छलेने च्युताश्रा
मार्गादक्ष्णोः स्रवदतितरामाशया धारयन्ती ।
पत्युर्दूतागमनमुदिता नश्यदीषद्विवेका
पप्रच्छैनं जडमिति ततः कामिनी नीरवाहम् ॥ ५ ॥
अग्रे मा गा जलद कृपया निःशरण्याऽस्मि पश्य
प्रष्टव्यं तद् किमपि शरण स्मारबाणाहतानाम् ।
सन्तः प्रायस्त्वदुपमितयोऽन्यार्तिमुन्मूलयन्तो
मन्यन्ते हि प्रथमविहितं पुण्यकर्म स्वकीयम् ॥ ६ ॥
कौबेराशां प्रथमसमयप्रस्थितेन त्वया किं
गाढापीडं जलदगिरिरालिङ्गितश्चित्रकूटः ।

शेषः १४ पृष्ठान्ते दृश्यताम् ।

# सर्वदर्शनसंग्रहः

( रचयिता—साहित्यायुर्वेदाचार्यः श्रीप्रियव्रतशर्मा शास्त्री, एम० ए०, ए० एम० एस० उपाध्यक्षः, आयुर्वेदमहाविद्यालयः, बेगूसराय, मुंगेर )

१

प्रत्यक्षमेवैकमिह प्रमाणं
न पुण्यपापे परलोकधर्मौ ।
शरीरमात्मा मरणं च मोक्षः
चार्वाकमन्तव्यमदोऽस्ति यत्र ॥

२

गुरूपदेशो निखिलो यथार्थं
सर्वं स्वचिह्नं क्षणिकं च दुःखम् ।
शून्यत्ववादं प्रवदन्ति यत्र
सामान्यधीमाध्यमिकाख्यबौद्धाः ॥

३

बाह्यार्थशून्यत्वमवन्तु नाम
विज्ञानमत्रास्तितया वदन्ति ।
ज्ञानोदयं शुद्धतमन्तु मोक्षं
योगान्विताचाररतास्तु बौद्धाः ॥

४

सिद्धान्ते यदि सन्ति नात्र विदुषां बाह्यार्थनीलादय,
इत्थं वक्तुमशक्यमेव हि यतो विज्ञानमात्रं भवेत् ।
बाह्यार्थास्तु भवन्तु नाम न परं प्रत्यक्षबोध्यास्तु ते
तेषां किन्त्वनुमेयतामतरता बौद्धास्तु सौत्रान्तिकाः ॥

५

बाह्यार्थमात्रन्तु भवेद् घटादिः
प्रत्यक्षबोध्यः, सकलास्तिवादाः ।
गुरोर्विरुद्धे ति वदन्ति भाषा
वैभाषिकाख्याः खलु यत्र बौद्धाः ॥

६

तेजोजले पार्थिववायवीयौ
परावणू स्तो जगमूलहेतू ।

निरोधमार्गौ समुदायदुःखे
चतुर्विधं तत्त्वममी भजन्ति ॥

७

पञ्चैव दुःखानि, विषादहेतु-
र्भ्रमोऽस्थिरत्वे समुदायसंज्ञः ।
द्वयोर्निवृत्तिप्रकृतिस्तु मार्गः
स भावनाख्यो हि निरोधमोक्षः ॥

८

प्रत्यक्षमनुमानञ्च प्रमाणद्वयमेव यत् ।
मन्यन्ते निखिलास्तत्तु बुद्धपादानुयायिनः ॥

९

जीवाजीवौ सुकृतदुरिते संवरश्चाश्रवश्च ।
बन्धो मोक्षो जरणसहितस्तत्त्वमेवाङ्कसंख्यम् ।
भावाभावात्मक इह यतो भाति सर्वः पदार्थः
कायापाये सततगमनन्तूर्ध्वतो जीवमोक्षः ॥

१०

ज्ञानदर्शनचारित्रसम्यग्योगैश्च सिध्यति ।
मोक्षः सर्वजनाभीष्ट आर्हतं दर्शनं हि तत् ॥

११

रामानुजाचार्यमते तु मुख्यं
तत्त्वत्रयं चिच्चिदभाव ईशः ।
अद्वैतभावं तु विशिष्टभूत-
मात्मा विभिन्नोऽपि परो बिभर्त्ति ॥

१२

यथार्थरीत्या परमात्मरूपं
ज्ञात्वा च तस्मिन् किल दासभावः ।
मोक्षस्वरूपं परिकीर्त्तितं तत्
तथापि जीवेश्वरभेदसत्ता ॥

१३

माध्वाचार्यैः प्रथितमरुतो यस्तृतीयोऽवतारः
भेदाः पञ्च स्वमतिकथितास्तेन, स द्वैतवादः ।

जीवो दासोऽङ्कनप्रभृतिभिर्ब्रह्म सेव्यं च भक्त्या
मोक्षाऽदुःखं परिणतिसुखं सृष्टिकर्तृत्वशून्यम् ॥

१४

कार्यं कारणयोगदुःखविरहा धर्मार्थहेतुर्विधि- ॥
स्तत्त्वानि प्रथितानि पञ्च गुरुणा तत्र स्वतन्त्रेश्वरः ॥
मोक्षो दुःखनिरासपूर्वकमथैश्वर्यं परं वाञ्छितम्
एवं पाशुपते वितर्कसहिते सद्दर्शने कीर्त्तितम् ॥

१५

पतिः पशुः पाशनिवृत्तिहेतू
तत्त्वानि षड् ज्ञानमसत्यबोधः ।
मोक्षो विबोधेन शिवत्वप्राप्तिस्
तद्दर्शनं शैवमतं प्रसिद्धम् ॥

१६

ईशः स्वतन्त्रो नहि जीवभिन्नश्
चैतन्ययोगादत एव मोक्षे ।
अपेक्षिता केवलप्रत्यभिज्ञा
नाहं विभिन्नः परमीश एव ॥

१७

आवश्यकं भस्मविलेपनं न
स्नानादयश्चापि शरीरशोषः ।
पूर्णात्मतालाभसरूपमोक्षः
तत्प्रत्यभिज्ञामतमेव सिद्धम् ॥

१८

सपदि संसृतिपारदपारदो
वपुषि दार्ढ्यसुसाधनपूर्वकम् ।
जगति जीवत एव तु मुक्तिद-
इति मतं हि रसेश्वरवादिनाम् ॥

१९

तत्त्वज्ञानं परमशुभयोर्मुक्तिहेतुः प्रसिद्धं
काणादानामनघमहतां सप्त वैशेषिकाणाम् ।
न्याये तत्त्वानि हि समुदिते षोडशैवाक्षपादे
औलूक्येऽन्तः पतति निखिलो गौतमीयः पदार्थः ॥

२०

अपौरुषेयाः खलु सर्ववेदा
धर्मस्तदुक्तिः स्वरवाप्तिहेतुः ।
तत्स्वप्रमाणत्वस्वराद्यवाप्ति-
र्मीमांसकानामयमेव मोक्षः ॥

२१

सांख्ये तत्त्वानि कामप्रहरणनयनाभ्यां मितानि प्रधाने.
तेषां ज्ञानं विधत्ते प्रकृतिपुरुषयोर्भेदरूपं प्रबोधम् ।
तस्माच्छान्तौ प्रकृत्याः पुरुषनिवपरं स्वस्वरूपेण मोक्षस्-
तेषां द्वौ सम्प्रदायौ कपिलमतिमतां सेश्वरश्चेशहीनः ॥

२२

चिच्छक्तेर्निरुपाधिकप्रकृतिना रूपेण सम्यक् स्थितिः,
मोक्षस्तत्र तु साधनानि प्रथिताष्टांगानि,योगस्तथा ।
चित्तस्यैव प्रवृत्तिरोध इति वै संकीर्तितः श्रेयसे,
मान्यं नैकमहर्षिभिर्निगदितं पातञ्जलं दर्शनम् ॥

२३

जीवे ब्रह्मणि नैव सत्यसहितः कश्चिद्विभेदः सताम्,
मिथ्येदं परिकल्पितं च बहुधा भिन्नं परब्रह्मणि ।
अज्ञानं खलु भावरूपमखिलं येभ्शो जगद् भासते,
तच्छान्तौ निजरूपप्राप्तिरिति वै मोक्षो मते शांकरे ॥

---

दशम पृष्ठस्य शेषांशः—

यक्षेनास्मिन् कृतवसतिना मुक्तकण्ठं यदुक्त-
स्तत् त्वं तत्त्वं कथय वचनं श्रोतुमिच्छामि सर्वम् ॥७॥
स्मारं स्मारं कृशितवपुषो मां तदालम्बिजीवां
प्राणप्रीतेर्मम वद सखे का कथा क्षीणशक्तेः ।
तस्य स्थित्वा स्वकरुणकथामश्रुपातं त्वदग्रे
खिन्नस्यान्तः प्रिय कथयतः का दशा नाम जाता ॥८॥

# महाकवि-कालिदास-विषये कापि किंवदन्ती

( निबन्धा— रतनलालमिश्रः, व्याकरणशास्त्री, काव्यतीर्थः, उपाध्यायः
संस्कृतापाठशालयः, नागौर, मारवाड़ )

अस्ति पुराऽवन्तिपुर्यां निखिलशास्त्रपारदृश्वा वदान्यतमः पण्डित-मण्डल-मण्डितः कोऽपि भोजनामा भूजानिः । तदभिरूपसंसदि विद्वद्रत्नं महाकविः कालिदासो नाम विद्वानासीत् । तस्मिन् काले तत्समप्रतिभो न कोऽपि विपश्चित् कविरिति

व्यतीतेषु केषुचिद् वर्षेषु काशीतो निखिलागमतत्त्वज्ञो विद्वत्तल्लजः कश्चिद् दोषज्ञो महाकविं विद्वन्मूर्धन्यं तं कालिदासं शास्त्रार्थे विजिगीषुः सन्नवन्तीनापेदिवान् । पण्डितोऽसावभ्युपवनं प्रातस्तनं कृत्यमवसाय्य शास्त्रार्थ-विधित्सयाऽवन्तिनाथं समाययौ । सति मिथो वार्तालापे तदगाध-पाण्डित्यं प्रेक्ष्य भोजोऽपि नितरां व्यस्मेष्ट । तस्मिन् क्षणेऽवन्तिनाथेनापरस्मिन्नहनि महाकवि-कालिदासेन सह तस्य शास्त्रार्थ-विधानं निरणायि । तं च पण्डितं स्वोपवने निवस्तुं प्रेषयामास सः ।

महाकविकालिदासोऽप्युद्भटं तस्य पाण्डित्यं निरीक्ष्य निज-विजये नितरां सन्दिग्धोऽभवत् । ततः किञ्चिद् विचिन्त्य कालिदासः तत्काल एव स्वभाव-पेशलं नयनसुभगमनालोचितचरं सर्वचित्ताकर्षकं योषिद्वेषमाकलय्य हिरण्मयं कलशमादाय च कूपजलोद्धरणमिषेण तत्पण्डिताधिष्ठितमुपवनं समवयस्काभिः काभिः पञ्चषाभिः सहचरीभिः सह प्रपेदे ।

अयि सख्यः ! रज्ज्वा निबध्नीत घटं यूयम् !! शीघ्रतां कुरुत, कालक्षेपो नु भवति !!! इत्थङ्कारं निगदति रमणीवेशधारिणि कालिदासे सहसा तत्पण्डितस्य दृष्टी रश्मिकृष्टेव निपपात । ततो रमणीवेषधारिणा महाकविनापि सकटाक्षपातं स पण्डितस्तथादर्शि यथा मन्मथ-मथित-मनाः सञ्जातः । इत्थं पारस्परिकं नेत्रानेत्रि युद्धं किञ्चित् क्षणं जातम् । तादृशोऽपि स नैजवैदुर्षीं व्यञ्जयन् पद्यमयेन संस्कृतेनाभिदधौ—

> किं मां नु पश्यसि घटेन कटिस्थितेन
> वक्त्रेण चारुपरिमीलित-लोचनेन ।
> अन्यं विलोकय जनं तव भाग्य-योग्यं
> नाहं घटाङ्कितकटिं प्रमदां भजामि ॥१॥

इत्थङ्कारं तत्पण्डितवचो निशम्य उत्तालतरङ्गित-तरङ्गिणीवास्खलिता तद-भिमानभङ्गप्रवणा गीर्वाणवाणी कापि पद्यमयी जगदे महाकवीश्वरेण—

> सत्यं ब्रवीषि मकरध्वजबाणपीडां
> नाहं त्वदर्पितदृशा परिचिन्तयामि ।
> दासोऽद्य मे विघटितस्तव तुल्यरूपः
> सोऽयं भवेन्नहि भवेदिति मे वितर्कः ॥२॥

अहं महाकवेः कालिदासस्य दास्यस्मि, एताश्च ममानुचर्यः सन्ति। भवादृश एव मम जलवाहको भृत्य आसीत्। स कस्माच्चित् कारणवशाद्रुष्टो भूत्वा सहसा क्वापि निर्गतः, गवेषितोऽपि नोपलब्धः। अधिकं चिरयति तस्मिन् स्वयमेवाहमेता अनुचरीर्गृहीत्वा जलार्थमागता। अत्र च त्वयि दृष्टे स मे भृत्यः स्मृति-पथ-पथिकः सञ्जातः। अतो निर्निमेषं मया त्वं निरीक्ष्यसे खलु यत् स एव प्राक्तनो मे भृत्यस्त्वम् उताहो अस्ति कश्चिदपर इति।

तद्वचो निशम्य पण्डितेन स्वमनसि विचिन्तितम्। महाकविकालिदासस्य दासी अपि एतादृशीं गम्भीरां संस्कृतगवीमभिधत्ते। न जाने स महाकविः कीदृश उद्भटो विद्वन्मूर्धन्यः स्यात्। (प्रकटम्) धन्या भवती यदेतादृशीं वैदुष्य-पूर्णां वाचमभिधत्ते। यतो निखिलशास्त्र-निष्णातं मामपि सन्देह-ह्रदे पातयति, तर्हि किं नाम कविसम्राजः कालिदासस्य वैदुषी-वैदग्ध्यम?

ततस्ताः सर्वा अपि तस्य महाकवेर्नानाविधं कीर्तिसुधा-धवलितं प्रबन्धं श्रावयित्वा मिथ आलपन्त्यः सौधं प्रति निववृतिरे। इतः स पण्डितोऽपि शास्त्रार्थ-विचारं दूरत एव विरहय्य महाकवेर्दासीनां प्रखरवैदुषीमभिनन्दन् तस्मात् स्थानात् प्रतस्थे। अहो चातुर्यं महाकवेः।

धन्योऽयं महाकविर्यस्य कीर्तिकौमुदी साम्प्रतमप्यज्ञानान्धतमसाच्छन्नहृदय-पटलानां मानवानां चित्ते ज्ञानालोकमातन्वती प्रमोदभरं बिभर्तितराम्। इति शम्॥

---

नवमपृष्ठस्य शेषांशः—

भूरेषा परुषैः करैरतितरां सन्तापिता दुर्भगा
प्रोद्यद्यौवनदं विलोक्य सकलं वैकल्यमालोकयत्।
कारुण्येन तवाप्यगान्नयनयोरस्रप्रवाहस्तु य-
स्तत्सम्पर्कसुखं तृणालिपुलकैराशंसतीवाम्बुद!॥ ७॥

भीष्मग्रीष्मसखे रवौ मृदुलतासन्धित्सया वारिदो
नान्यं मार्गमवेक्ष्य दाक्ष्यविधिना तन्मण्डलं त्वाक्रमत्।
तस्योद्रिक्तवसुप्रतापजनिताहङ्कारमावृत्य च
द्रागुद्दर्पापनयेन हन्त! विनयाचारं चिरं शिक्षते॥८॥

चारं पङ्किलमम्बुचण्डकिरणो भूमेर्यदाकृष्य ते
प्रादात्तद्विमलं विधाय बहुधाऽऽयासैः सहस्राधिकैः।
पेयं मञ्जुलमौक्तिकोपमपृषत्तृष्णालुलोकामृतं
वर्षन् वारिद, शोभसे गुरुरिवादोषां स्वविद्यां ददत्॥९॥

# "भूभ्रमणम्"

ले० पं० अनूपमिश्रः ग० सं० कॉलेज, काशी।

भुवो भ्रमणमुद्दिश्य पाश्चात्यैरचलीकृतः।
सूर्य एवेति विषयो यथामति विविच्यते ॥

विषयोऽयमतिविलक्षणो यत् सृष्ट्यादित एव भूः स्थिरा, सूर्यश्चल इत्यामनन्ति सर्वज्ञाः प्राचीनाः सर्वे ज्योतिःशास्त्ररहस्यवेदिन', केवलं सर्वतः प्रथमम् ईरानदेशवासिनो दार्शनिकाः 'पिथागोरस' नामका यवना विषयान्तरेऽपि स्वौत्कृष्ट्यप्रदर्शनाय भुवमेव चलां सूर्यं च स्थिरं मत्वा स्वसमाजे स्ववैशिष्ट्यं प्रकाशयामासुः। अथैवमतीते कियति काले ज्योतिःसिद्धान्तरहस्यवेदी भारतीयोऽप्यार्यभटस्तन्मतमनुसृत्य यत्किञ्चिदिह भारतेऽपि निजप्रभाववृद्ध्याशया तथैव नवीनं स्वमतं प्रदर्शितवान्, तस्य खण्डनं तदासन्नकालीनैर्लल्ल वराहमिहिरप्रभृतिभिर्विद्वद्भिः सम्प्रदर्श्य मिथ्याज्ञानात्मकोऽयं विचार इति समस्ते भारतवर्षे प्रचारितम्, तद्दिनादारभ्येयं शङ्का दूरीभूता। सर्वेऽपि भारतीया भुवमेवाचलां सूर्यं च चलं पुनर्दृढीकृत्य तदनुसारमेव प्रक्रियात्मकं ज्योतिषज्ञानं प्रचारयामासुः। शब्दकोषेऽपि तथैव सनातनकालादागच्छति 'भूर्भूमिरचलानन्ते'ति वैदिकमन्त्रेणापि "आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यञ्च, "हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन्" एतेन स्वयं सूर्यो भुवः प्रक्रिमणं दैनन्दिनं करोतीति सिद्ध्यति। अन्योऽपि वैदिको मन्त्रो यथा "येन द्यौरुग्रा पृथिवी च दृढ़ा येन स्वस्तभितं येन नाकः। योऽन्तरिक्षे रजसो विमानः कस्मै देवाय हविषा विधेम ॥" एतेनापि भुवः स्थिरत्वमेवायाति। ज्यौतिषसिद्धान्तभास्करो भास्कराचार्योऽपि स्वसिद्धान्तशिरोमणौ गोलाध्याये कथितवान् 'यथोष्णतार्कानलयोश्च शीतता विधौ द्रुतिः के कठिनत्वमश्मनि मरुच्चलो भूरचला स्वभावतो यतो विचित्रा बत वस्तुशक्तयः' । 'एवमार्षग्रन्थेऽपि सूर्यसिद्धान्ते सूर्यांशपुरुषेणापि तथैवोक्तम्। यथा—'ब्रह्माण्डमध्ये परिधिर्व्योमकक्षाभिधीयते तन्मध्ये भ्रमणं भानामधोऽधः क्रमशस्तथा ॥ 'मन्दामरेज्यभूपुत्रसूर्यशुक्रेन्दुजेन्दवः। परिभ्रमन्त्यधोऽधस्थाः सिद्धविद्याधरा घनाः ॥ 'मध्ये समन्तादण्डस्य भूगोलो व्योम्नि तिष्ठति। 'बिभ्राणः परमां शक्तिं ब्रह्मणो धारणात्मिकाम् ॥" "वराहमिहिरोऽपि 'भ्रमति भ्रमस्थितेऽथ क्षितिरित्यपरे वदन्ति नोडुगणः। यद्येवं श्येनाद्या न खात्पुनः स्वनिलयमुपेयुः ॥ अन्यच्च भवेद्भूमेरह्न भ्रमरहसध्वजादीनाम्। नित्यं पश्चात्प्रेरणमथाल्पणा स्यात्कथं भ्रमति ॥" "एवमन्येऽपि—

'यदि च भ्रमति क्ष्मा स्वकुलायं कथमाप्नुयुः खगाः। इषवोऽभिनभःसमुज्झिता निपतन्तः स्युरपां पतेर्दिशि ॥ 'पूर्वाभिमुखे भ्रमे भुवो वरुणाशाभिमुखे व्रजेद्धनः। 'अथ मन्दगमात्तदा भवेत् कथमेकेन दिवा परिभ्रमः ॥ इत्याद्यनेक-

प्रमाणसमुच्चयालोचनाद्भुवःस्थिरत्वमेवायाति निःपक्षधियां सुधियां पुरतः? वस्तुतः पिथागोरसनिदिष्टसिद्धान्तमतानुयायिनां भूभ्रमणवादिनां बहूनां पुरत; स्ववैशिष्ट्यप्रकाशनोद्देशादेवार्यभटस्तदनुकूलं परम्परागतसिद्धान्तविरुद्धं तदानीन्तनं स्वमतं प्रकटयामास। तात्त्विकदृष्ट्या तस्य चिराभ्यस्तसिद्धान्तः परम्परागतो भुवः स्थिरत्वरूप एवासीत्, केवलं भूभ्रमणवादिनामनुरोधादेवैष नूतनः सिद्धान्तः प्रकटीकृतः, तदाधारिकामार्यभटस्य प्रसिद्धिं श्रुत्वाऽन्येऽपि द्वित्रा मुनीश्वरप्रभृतयस्तथैव दिग्दर्शनं कृतवन्तः। 'येन केनाप्युपायेन प्रसिद्धः पुरुषो भवेत्' इत्येवमुद्दिश्य तदानीन्तनाः संस्कृतज्ञा अपि देशकालानुसारं तथा कर्तुं प्रवृत्ता जाताः, वस्तुतस्तेषामान्तरिकः सिद्धान्तो भूभ्रमणसहायको नासीदेव। तदनन्तरं यूरोपीयैरपि कूपर—न्यूटनप्रभृतिभिरेतद्भूस्थिरत्वप्रतिकूलमर्थतो भुवश्चलत्वमभिनिर्दिश्य प्रक्रियात्मकगणितस्य सारल्यं स्वस्वोत्कृष्टत्वप्रदर्शनार्थमभिनिर्दिष्टम्। यदाधारिका भारतीया अपि पाश्चात्यविद्याध्ययननिपुणाः प्रायशः सर्वेऽपि तन्मतपक्षपातिनः सञ्जाताः। परन्तु सर्वेऽपि ते निःसारा इति। यथार्थतः सनातनपरम्परागतशिष्टाचारव्यावहारिकसिद्धान्तानां प्रतिकूला एव पाश्चात्या विशेषतो यवना इत्ययं तेषां प्राकृतिको धर्मो यतः सर्वेष्वपि सनातनकार्यजातमार्गेषु षड्भान्तरितं दिग्वैपरीत्यं समामनन्ति ते। केवलमाहारादौ सनातनशैलीमेवानुयान्ति। यद्यपि भूसूर्ययोरन्यतरस्यैकस्य चलत्वेऽपरस्य स्थिरत्वे ग्रहणाद्यखिलवस्तुप्रत्यक्षीकरणं नासम्भवन्तथापि परम्परागतसिद्धान्तेनैव यदि सर्वं युक्तिसंगतं प्रत्यक्षदृग्गोचरं च भवत्येव तर्हि व्यर्थनवीनसरण्या निवेशनस्य काऽवश्यकता। अर्के चेन्मधुलाभः स्यात् किमर्थं पर्वतं व्रजेत्' तथापि नवीनसरण्या किमपि वैशिष्ट्यं नायाति, केवलं यूरोपीय-'ग्रिनविच-'संज्ञनगरे (observatory) संज्ञवेधशालायां सर्वांशिकप्रत्यक्षीकरणसाधनोपयोगियन्त्रादिसद्भावतः प्रक्रियात्मकसिद्धान्तज्यौतिषसम्बन्धिगणितक्रियासरणिलाघवं प्रतीयते, यत्तु प्राचीनसिद्धान्तानुसारिवेधशालानिर्माणादपि भवितुमर्हति। यद्यपि तन्मूलका भूचलनसम्बन्धिनस्तात्त्विकहेतवो न केनाप्युट्टङ्किताः केवलं तात्त्विकज्ञानहीनानां जनानां विशेषतो बालच्छात्राणां प्रतारणाय यत्किञ्चिदिह प्रमाणजातमालोचितं तत्सर्वमसङ्गतप्रायं नैजपाण्डित्यप्रकाशनपरमेव सर्वतो विभाति यथा 'मैट्रिक ज्यॉग्राफी' नामकग्रन्थे पञ्चप्रमाणोल्लेखनाद्भुवश्चलत्वं सूर्यस्य स्थिरत्वमदर्शि तत्सर्वमसङ्गतं भ्रमात्मकज्ञानमेव सिद्ध्यति। यथैकस्तेषामवनिचलनसम्बधी प्रमाणरूपो 'यथैको लम्बरूपः स्तम्भो वरीवर्ति यदग्रतो लघुतमगूढवस्तुनः प्रक्षेपादधः स्तम्भमूले न पतति किञ्चततो बहिरेव पततीति तद्वस्तुपतनकालसम्बन्धिनी कापि गतिर्भुवोऽस्तीति प्रमाणीकृतम्, वस्तुत ईदृक्समालोचनमयुक्तं यतः प्राकृतिकोऽयं (Natural) नियमो यस्य कस्यापि लम्बरूपस्तम्भस्य मूले बीजरोपणात्तदुत्थबालवृक्षः स्वयमेव लम्बरूपः स्तम्भसमानान्तररूपो वा कोण्याकृतिको न भवति प्रत्युत कर्णाकृतिक एवोत्पद्यते, परन्तु स्तम्भमूलाद्यावकथञ्चिदन्तरितप्रदेशे बीजरोपणात्स्वयं तदुत्थवृक्षः स्तम्भसमानान्तररूपः

कोटिरूप एवोत्पद्यते, तथैव स्तम्भाग्रात् क्षितिजसमानान्तरधरातले द्वित्राङ्गुलान्तरितस्थानाद्यदि तद्द्रवस्त्वधः प्रक्षिप्यते तदाधः क्षितिजधरातले स्तम्भमूलाद्वित्राङ्गुलान्तरमित एव स्थाने पततीती प्राकृतिको नियमः प्रत्यक्षः। अथ येनादौ स्तम्भाग्राद्द्रवस्तुनः प्रक्षेपाद्भुवः पूर्वाभिमुखगमनं निणीतं पश्चिमदिशि 'प्रक्षेपात्तत्सर्वं भ्रमात्मकमेव, यतस्तेनैव यथा यद्युत्तरस्यां दिशि स्तम्भाग्रात्प्रक्षेपाच्चेन्मतेन भुवो दक्षिण दिग्गमनं, दक्षिणप्रान्ते तत्प्रक्षेपाद्भुव उत्तरदिग्गमनं, पूर्वस्यां प्रक्षेपाद्भुवः पश्चिमदिग्गमनमिति तया रीत्या भुवः सर्वदिग्गमत्वं समागच्छेत् तेनेदं कथनं सर्वतो भ्रमात्मकमेव अल्पज्ञानां कृते सर्वथा प्रतारणपरं निश्चितम्, तेनेयं भूः स्थिरैवेति नो विवादावसरः तथैव नौकाधिरूढजनानामपि कृते नदीतटस्थवृक्षाणां चलनमज्ञानामेव कृते युक्तं, ज्ञानिनां कृते तु सर्वतोऽयुक्तमेव, तथैवान्यान्यपि तत्रत्यानि यानिप्रमाणानि तानि सर्वाण्यप्यसङ्गतान्येव। यदि भूचलनंयथार्थं मन्यते तदा वायुयानस्य यूरोपभारतयोरावागमनमतुल्यकालिकं भवेदेव, परन्तु प्रत्यक्षीकरणसिद्धान्तसरण्या यूरोपाद्यावता कालेनागमनं वायुयानस्य भारते,तावतैव भारतात् यूरोपगमनं तस्येति दैनन्दिनो नियमःप्रत्यक्षः। यदि भुवो गमनं पूर्वस्यां मन्यते तदा भारतात् यूरोपगमनमल्पकालेनैव, किन्तु यूरोपाद्भारतगमनमसंख्यगुणितकालेनैव सम्भाव्यते, अत्रापि भूचलनपक्षपातिभिः पाश्चात्यैर्वातावरण (atmosphere)सम्बन्धिनी विडम्बना प्रक्षिप्ता या च तात्त्विकविचारेण प्राच्यप्रतीच्यसमुभयज्ञानशालिनां गम्भीरज्ञानिनां विदुषां कृते सर्वतोऽसङ्गतप्रायैवप्रतिभातीत्यलम्।

इत्थं संक्षेपतोऽद्यत्वे भूगतिः प्रतिषेधिता ॥
सूर्य एव चलो नित्यं गम्भीरविदुषांमते ॥

## किं विद्वांसो मनुष्या एव देवाः ?

निबन्धा—श्रीदीनानाथ शर्मा शास्त्री सारस्वतः, विद्यावागीशः, विद्यानिधिः, विद्याभूषणः।
( प्रिन्सिपल सं० हिं० महाविद्यालय, रामदल, दरीवा, देहली )

क्रियतेचित् कालाय स्थगितः 'संस्कृतरत्नाकरः' सम्प्रति काश्यां जाह्नवीमासाद्य पुनरुद्वेलितः। अद्सीयसम्पादक व्यवस्थापकैः 'रत्नाकरः काशीवासं प्राप्तः' इति प्रवादो मृषोद्यं लम्भितः। अहमपि सम्पादकानामानुकूल्ये सति यथा पूर्वमिदमीयां सेवां विधातुं प्रयतिष्ये। अस्मभ्यं दैवैर्यथा स्वकाव्यं वेदो दत्तः, स्वकीया नदी सुरसरिद् दत्ता; तथैव अस्मान् अनुगृह्य अस्मभ्यं स्वकीया गीर्वाणवाण्यपि दत्ता। एतदेव कारणं यत्—तस्यां देवयोनेः पर्याप्तं वर्णनं दरीदृश्यते। परमद्यतनाः केचिद् अर्वाञ्चः समाजा देवयोनेः सत्तामपलपन्तः सन्तस्तां मनुष्ययोनेरनतिरिक्तां मन्वते। तेषामयमभिसन्धिर्यद्—विद्वांसः सत्यवक्तारो वा मनुष्या एव देवाः, देवयोनिः काचिद् मनुष्ययोनेः स्वतन्त्रा योनिर्नास्ति। तेऽत्र उपोद्बलकरूपेण 'विद्वाँ सो हि देवाः' इति शातपथं 'सत्यसंहिता वै देवा अमृतं

मनुष्याः, इति ऐतरेयस्थं च वचनं समुपस्थापयन्ति। यदि तेषामियं धारणा सत्या मन्येत तर्हि आस्माकीनप्राच्यसाहित्यस्य अधिकांशो वैयर्थ्यमुपढौकते; सदेवमहिमा, सा देवोपासना च नैरर्थक्यं बिभर्ति-इति विमृश्य देवगवीसमुपासकानां समक्षं स्वकीयमनुसन्धानं समर्पयामः। आशास्यते-'संस्कृतरत्नाकर' पाठका अहमहमिकया एतदीयां ग्राहकत्वस्वीकृत्या प्रसेवीयां विधाय असम्भव्यमेतद्वरिवस्यावसरं दद्युः।

अर्वाञ्चो मनुतनुजनुषः शतपथप्रमाणेन स्वकीयपक्षमुपोद्बलयन्तः शतपथस्य प्रामाण्यं स्वीकुर्वन्तः सन्ति इति स्पष्टमेव। वयमपि तदभिप्रेतं पिशनयितुं प्रयतामहे। अनुसन्धानरसिकानां पाठकानामिह अवधानमपेक्ष्यते। शतपथब्राह्मणं शुक्लयजुर्वेद—(वाजसनेय, काण्व) संहिताया ब्राह्मणभागः; अत एव वेदः। एतद्विषये 'संस्कृतरत्नाकर'स्य विगते विशिष्टे वेदाङ्के विशिष्टविवेचनां वयमकुर्म *। अत्र तदवसरो नास्ति। परमेतद् अवश्यमवसेयं यत् शतपथब्राह्मणं देवान् मनुष्यांश्च भिन्नभिन्नयोनीन् मन्यते। एतदत्र विस्तरेण दर्शयितुं शक्यते; परं स्थानाभावात् तथा न क्रियते। केवलमेकत्र तदीय प्रमाणोपन्यासं कुर्महे। तथाहि—

'प्रजापतिं वै भूतानि उपासीदन् (प्रजा वै भूतानि)। वि नो धेहि यथा जीवाम' (शत. २।४।२।१) अत्र सर्वाः प्रजा ब्रह्मणः पार्श्वे स्वजीवननिर्वाहोपायं प्रष्टुं गता इत्युक्तम्। 'ततो देवा यज्ञोपवीतिनो भूत्वा दक्षिणं जानु आच्य उपासीदन्, तानब्रवीद्-यज्ञो वोऽन्नम्, अमृतत्वं वः, ऊर्ग् वः, सूर्यो वो ज्योतिरिति' (शत० २।४।२।१) अत्र देवानां जीवनं प्रोक्तम्। 'अथैनं पितरः...उपासीदन्। तानब्रवीद् मासि मासि वोऽशनं स्वधा वः, मनोजवो वः' (शत २।४।२।२) पूर्वत्र देवानामन्नं यज्ञः प्रतिपादितः; अत्र च पितॄणां प्रतिमासमशनमुक्तम्।

'अथैनं मनुष्याः...उपासीदन्, तानब्रवीत् सायं प्रातर्वोऽशनम् प्रजा वः, मृत्युर्वः' (शत. २।४।२।३) अत्र मनुष्याणां द्विर्भोजनमुक्तम्। देवता अमराः प्रतिपादिता आसन्, अत्र स मनुष्याणां मृत्युः प्रतिपादितः। 'अथैनं पशव उपासीदन्, तेभ्यः स्वैषमेव चकार। यदैव यूयं कदाचन लभाध्वै, यदि काले यद्यनाकाले, अथैव अश्नाथ (४) अत्र पशूनां निर्वाहः प्रतिपादितः। अथैनं शश्वदपि असुरा उपसेदुः, तेभ्यस्तमश्च मायां च प्रददौ, अस्ति अहैव असुरमाया। ता इमाः प्रजास्तथैव उपजीवन्ति यथैव आभ्यः प्रजापतिर्व्यधात्' (शत. २।४।२।५) अत्र असुरेभ्यो मायाप्रदानस्य वर्णनं कृतम्। ततः प्रोक्तं यद्-एभ्यो जीवेभ्यो ये ये नियमा दत्ताः; ते तान् पूरयन्ति, परन्तु मनुष्याणां कृते प्रोक्तं यत्-ते एव स्वनियमानतिक्राम्यन्ति। यथा च—'नैव देवा अतिक्रामन्ति, न पितरो न पशवो, मनुष्या एव एके अतिक्रामन्ति' (शत. २।४।२।६)

अत्र कियत्स्पष्टरूपेण देवमनुष्यादीनां मिथो भेदः प्रदर्शितः। इयमन्या वार्ता यद्—मनुष्यः कदाचिद् देवसदृशः कथ्येत, पशुसदृशो वा, असुरसदृशो वा, परमेतेन देवयोनिर्मनुष्ययोनितः स्वतन्त्र सत्ताऽमननम् अशास्त्रीयमेव। यदि

गोबलीवर्दन्यायेन मनुष्यजातेरेव विशेषभूता देवा असुराश्च मन्येरन्; तेषां पृथक् सत्ता न स्वीक्रियेत; तदा तद्रूपेण मनुष्ये पशुत्वस्यापि सम्भवाद् मनुष्यस्य विशेष एव पशुर्मन्तव्यः स्यात्, पशुस्ततः स्वतन्त्रयोनिर्न मन्तव्यो भवेत्। यद्येतद् असह्यम्; तदा पूर्वः पक्षोपि (देवानां मनुष्यविशेष मननात्मकः) न युक्तः। फलतो देवा मनुष्याश्च भिन्नभिन्नयोनयः। तदेवोक्तं शतपथे-'देवयोनिरन्यो मनुष्ययोनिरन्यः' (७।४। ।४०)।

यत् खलु वादिनः 'विद्वाँसो हि देवाः' इति शतपथश्रुतिमुपस्थाप्य एतेन विदुषो मनुष्यानेव देवानाचक्षते; तदिदं छलम्। न च सोर्थोऽत्र विवक्षितः ते स्वपारस्परिकप्रकृतिवशात् पूर्वोत्तरपाठापलापं कुर्वन्ति। सोयं पाठः—'उशिजो वह्नितमान्' इति, विद्वाँसो हि देवाः, तस्माद् आह-उशिजो वह्नितमानिति' (शत. ३।७।३।१०) अत्र 'हि' शब्दो हेत्वर्थकः; यतो हि तत्पूर्तिकर्ता 'तस्मात्' इति शब्दोऽग्रे विद्यते। 'यत्तदोर्नित्यः सम्बन्धो भवति' इति हि प्रसिद्धो न्यायः। यदा खलु उक्तकण्डिकायाम् उपसंहारे 'तस्माद्' इति तद्शब्दः प्रत्यक्षः ततस्तत्सध्रीचीनेन 'यस्माद्' इति शब्देनापि तत्प्रतियोगितायाम् उक्तश्रुतेरुपक्रमवाक्ये अवश्यंभवितव्यम्। अनुसन्धानेन प्रतीयते यत्-स शब्दोऽत्रास्ति; सोस्ति 'हि' शब्दः। 'हिः' हेत्वर्थे प्रसिद्धः। 'तस्माद्' इत्यस्य अनुरोधेन अत्र 'हि' शब्दो 'यतः' यस्माद्' इत्यर्थेस्ति। ततो 'हि' शब्दस्य हेत्वर्थकत्वाद् वाद्यभिमता देवविद्वच्छब्दयोः पारस्परिकपर्यायवाचकता निराकृता।

अयमभिसन्धिः—उक्ता शातपथी श्रुतिः 'देवान् दैवीर्विशः प्रागुरुशिजो वह्नितमान्' (यजुः वा० सं० ६।७) इति मन्त्रविवरणेऽस्ति। उक्तयाजुषमन्त्रे 'देवान्' इति पदं विशेष्यम्। उशिज' इति पदं तु 'देव' शब्दस्य विशेषणम्। अत्र 'उशिजः' इत्यस्यार्थोऽस्ति 'बुद्धिमतः' (द्वितीया बहुवचने) 'निघण्टौ (३।१५) मेधाविनश्चतुर्विंशतिनामसु एकोनविंशं नाम 'उशिजः' इत्यस्ति। अयमेवार्थ उवट महीधरभाष्ययोरपि कृतः। श्रीदयानन्दस्वामिनापि स्व 'निघण्टु वैदिककोषस्य शब्दानुक्रमणिकायां ३३ तमे पृष्ठे 'उशिजः' इति मेधाविनाम' इति लिखितम्।

इदानीमयं प्रश्न उपतिष्ठते यद्—उक्त (६।७) याजुषकण्डिकायां 'देवान्' इत्यस्य विशेषणम् 'उशिजः' मेधाविनः (इति मन्त्रभागेन कथं प्रयुक्तमिति अत्र तच्छेषपूरकेण ब्राह्मणभागेन उक्तकण्डिकाविवरणे प्रोक्तम्—'विद्वाँसो हि देवाः तस्माद् आह उशिजो वह्नितमान्' इति (शत. ३।७।३।१०) अयमर्थः हि—यतः कारणाद् देवाः—अमृताः, विद्वांसः-जानानाः (यथा 'निरुक्ते' (८।२०।१) वयुनानि विद्वान्' इति मन्त्रस्थस्य 'विद्वान्' इत्यस्यार्थः 'प्रजानन्' इति कृतः] भवन्तिः सर्वञ्चिज्जानन्ति; तस्मात्-तत्कारणाद् ऋषिस्तान् 'उशिजो वह्नितमान्' इति आह—उक्तविशेषणविशिष्टान् कथयति।

देवानां सर्वज्ञत्वे इमानि प्रमाणानि अवसेयानि—'यन्मनुष्याणां परोक्षम् तद् देवानां प्रत्यक्षम्' (ताण्ड्य महाब्राह्मणे २२।१०।३) 'मनो देवा मनुष्यस्य

आजानन्ति' (शत. ३।४।२।६) 'न तिष्ठन्ति न निमिषन्ति एते देवानां स्पश इह ये चरन्ति' (ऋ० सं० १०।१०।८)। यदा एवमिन्द्रादयो देवाः सर्वज्ञविज्जानन्ति यद्-अमुकद्वारा अस्मानुद्दिश्य हविः प्रक्षिप्यते; ततस्तेषाम् 'उशिजः-बुद्धिमन्तः' इति कथनं स्थाने एव। तदैव तु देवास्तत्क्षणे एव अर्थात् यज्ञे देवताध्यानसमय एव यथा च 'निरुक्ते' प्रोक्तम्—यस्यै देवतायै हविर्गृहीतं स्यात्; तां मनसा ध्यायेद् वषट्करिष्यन्' (८।२२।११) यज्ञान् प्राप्नुवन्ति। यथा च व्याकरण'महाभाष्ये' प्रोक्तम्—'एक इन्द्रोऽनेकस्मिन् क्रतुशते आहूतो युगपत् सर्वत्र भवति' (१।२।६४)

यदा एवम्, तद्देवा विद्वन्मनुष्येभ्यो भिन्नाः सिद्धाः; यतो हि देवास्तु परोक्ष-ज्ञत्वात् शतशो यज्ञेषु आहूता युगपत् सर्वत्र प्राप्नुवन्ति; परं विद्वान् मनुष्यः शतशो यज्ञेषु आहूतो युगपत् सर्वत्र न प्राप्नोति। इत इह कण्डिकायां 'विद्वांसः' इत्यनेन सध्रीचीनः 'देवाः' इति शब्द, एव वर्तते; न खलु 'मनुष्या' इतिशब्दः तद् विद्वन्मनुष्याणां ग्रहणं भवेदेव कथम्? अत्र 'मनुष्याः' इति कथनाऽभावाद् विद्व-त्पशुग्रहणेऽपि न कापि बाधा आपतति; तत् किं भवन्तो विद्वांसं (समझदार) पशुमपि 'देवाः' इति आचक्षते यदि न; तद् विद्वान् मनुष्योऽपि देवो न भवितुमर्हति।

अन्या त्रुटिरियमत्र पक्षे आपतति यद्—उक्तयाजुषकण्डिकायां 'शतपथ' कण्डिकाया 'वादिजनाभिप्रेतार्थानुसारं 'देव' शब्दं विद्वत्पर्यायवाचकं मन्येमहि; योनिविशेषवाचकंन; तद् 'उशिज' इति विशेषणं व्यर्थं भवति: अथवा 'देवान्' इति शब्दो वैयर्थ्यमापद्यते; यतो हि उक्तयाजुषमन्त्रे 'उशिजः' इति पदं विद्वद्वाचकम्; तथैव 'देवाः' इति पदमपि विद्वद्वाचकं चेद् वादिजनानुसारम् तर्हि अन्यतरस्य पदस्य वैयर्थ्यमापद्यते। अन्या च हानिरियमस्मिन् पक्षे, यद्… 'देव' शब्दोऽपि उक्तमन्त्रे विशेषणं भवति 'उशिज' शब्दोऽपि च। विशेष्यः कोऽपि न तिष्ठति उक्तयाजुषमन्त्रे। इतश्च विद्वन्मनुष्याणां पार्श्वे 'दैवीः विशः प्रागुः' इत्यर्थोऽपि न समन्वेति, यतो हि दैवी प्रजा भिन्नास्ति, मानुषी प्रजा च भिन्ना। यथा च-'दैवीश्च विशो मानुषीश्च' (यजुः वा० सं० १७।८६) 'मानुषीणां विशां दैवीनामुत' (अथर्व० सं० २०.११।२), 'मृगा मृगैः सङ्गमनुव्रजन्ति, गावश्च गोभिस्तुरगास्तुरङ्गैः' इत्यनुसारं दैव्या विशो देवानां पार्श्वे गमनं स्थाने भवति।

निष्कर्षोऽयं यत्—शतपथानुसारं देवा जन्मनैव विद्वांसो भवन्ति, ते अनभिज्ञा न भवन्ति। मनुष्येषु तु विद्वांसस्तथा अविद्वांसो द्विविधा जनाः भवन्ति; परन्तु देवा विद्वांसोऽविद्वांसश्च-इति द्विविधा न भवन्ति, केवलं विद्वांस एव भवन्ति। एवमत्र उक्तशतपथश्रुतौ 'देव' शब्दो विशेष्यः "विद्वान्" इति तद्विशेषणम्, तदोयाऽविद्वत्ताव्यावर्तकम्। यथा महिषादिपशवः शिशवोऽपि जन्मनैव जलाशये तरन्ति; पक्षिणो जन्मत एव, विनैवशिक्षाम् आकाशे उड्डीयन्ते; तथैव देवयोनिप्राप्तावेव अणिमादिसिद्धिर्विद्वत्ता च विनैवाध्ययनमभ्यासं वा सर्वेषां देवानां प्राप्ता भवति; परन्तु मनुष्येषु विद्याध्ययनतोऽभ्यासाच्च उत्तरमेव वैदुष्यं आपद्यते देवयोनिवद् जन्मना न।

इत उक्त 'शतपथ' कण्डिकायां 'देवाः'सन्ति विशेष्यभूताः; विद्वांसस्तत्र न विशेष्याः इति तु तत्र विशेष्यभूतानां देवानां विधेयं विशेषणमस्ति, पर्यायवाचकशब्दो न। तद् देवास्तु स्वभावेन विद्वांसः (ज्ञातारः) सिद्धाः; विद्वन्मनुष्या देवा न सिद्धाः; यतोहि उक्तकण्डिकायां 'विद्वांसः' विशेष्या न सन्ति। यस्य याजुष (६।७) मन्त्रस्य शतपथोक्तम् उक्तमिदं विवरणमस्ति; तत्र 'विद्वांसः' इति शब्द एव न येन 'विद्वान्' इत्येष विशेष्यो मन्येत। तत्र तु 'देव' शब्दः, स एव तस्मिन् मन्त्रे, अस्मिन् ब्राह्मणे च विशेषः।

इतश्च उक्तब्राह्मणकण्डिकायां देवविदुषोः पर्यायवाचकतापि नेष्टा; अन्यथा तत्रत्यस्य हेत्वर्थकस्य 'हि' शब्दस्य व्याकोपो भवति, यस्य 'तस्मात्' इति शब्दः सहायः। एतेन 'शतपथ' मते देवमनुष्ययोर्भिन्नभिन्नता सिद्धा। यदि 'शतपथ'स्य देव-विदुषोः पर्याय वाचकता अ'विष्यदिष्टा; तत् पुनः 'विद्वाँ सो ये शतक्रतु सत्रमलवत' (शत० ११।५।५।१२) अत्र 'विद्वद्-देवशब्दयोः पुनरुक्तिर्नाभविष्यद्, उक्तयाजुषमन्त्रेपि च 'देवान्' (विदुषः) 'उशिजः' इति पुनरुक्तिर्नाभविष्यत्। देव-विदुषोर्देवोशिजोश्च पार्थक्येनोक्त्या देवशब्दस्य विद्वत्पर्यायवाचकता निरस्यते। अयमत्यन्तामावश्यकोस्ति विषयः। अत्र अवधानेन आस्माकीन संस्कृतसाहित्यस्य रक्षा भवितुमर्हति; अत्र अनवधाने कृते सर्वं संस्कृतसाहित्यं व्यर्थभूतं तिष्ठेत्।

'यो देवस्य प्रियो विद्वान्' (बोधायनगृह्यशेषसूत्रे १।२४।१५) अत्र 'देवस्य' 'विद्वान्' इत्यनयोर्विभक्तिभेदेनापि मिथो भेदः स्पष्टः। पर्यायवाचकेषु कथं नाम विभक्तिभेदः स्यात्? 'देव-द्विज-गुरु प्राज्ञ-पूजनं...तप उच्यते' (भगवद्गीता १७।१४) अत्र तु स्पष्टमेव देवशब्दाद् विद्वद्वाचकः 'प्राज्ञ' शब्दः पृथङ् निहितः। अत एव कस्मिन्नपि निघण्टौ, कस्मिन्नपि वा कोषे 'देव' शब्दो विद्वत्पर्यायवाचकेषु नास्ति।

'महाभारते' आदिपर्वणि 'विश्वे देवास्तथादित्या वसवोथाश्विनावपि।' (१।३४) इत्येवं प्राग् देवानुमुत्पत्तिमभिधाय ततः एव 'ततः प्रसूता विद्वांसः शिष्टा ब्रह्मर्षिसत्तमाः' (१।३५) इति विद्वद्ब्राह्मणोत्पत्तिरुक्ता। एतेन देवा विद्वन्मनुष्येभ्यः पृथक् सिध्यन्ति। 'देवा' शब्दो यदि विद्वत्पर्यायोऽभविष्यत्; तद् यथा वैदिकनिघण्टौ' (३।१५) विद्वत्पर्यायाः 'कविः' (१०) मनीषी (११), विपश्चित् (१६) इत्यादि शब्दा आगताः; तथा 'देव' शब्दस्तत्पर्याण वा 'अमृत' (निरु० ८।२०।१) प्रभृतयोपि तत्राभविष्यन्; परं तत्राभावाद् वादिनां पक्षो निराक्रियते।

वादिनो विदुष एव देवान्, विदुष एव च ब्राह्मणान् मन्यन्ते। एवं सति देवब्राह्मणयोर्भेदेन न भाव्यम्; परन्तु 'सम्पूजयेद् देवान्, ब्राह्मणाँश्च'(मनु०७।२०१) 'देवाँश्च ब्राह्मणाँश्च' (शत० ३।३।४।२०) 'सम्पूज्य देवतामश्विनौ, गां ब्राह्मणाँश्च' (चरकसं० कल्पस्थाने १।१२) अत्र देवब्राह्मणयोर्भिन्नतया पूजा प्रोक्ता। यदि अत्र 'देवाः' 'विद्वांसो मनुष्याः' मन्येरन्; तद् 'ब्राह्मणाः' स्वयम् अविद्वांसः

सिध्येयुः; अन्यथा विदुषः पर्यायद्वयस्य पृथग्-ग्रहणं व्यर्थम्। अविदुषि ब्राह्मणे मते ततो वादिनां गुणकर्मकृतवर्णव्यवस्थापि स्वयं निराकृता स्यात्। 'ब्राह्मण' शब्दस्य वा 'विद्वन्मनुष्यपर्यायत्वे पुनर्देवशब्दो विद्वत्पर्यायो न तिष्ठेत्। 'सेय-मुभयतः स्पाशा रज्जुः'। यदि देवशब्दो विद्वत्पर्यायोऽभविष्यत्; तत् पतञ्जलि-पाणिनियास्कादयो विद्वांसो देवा अभ्यधास्यन्त, न मनुष्याः। परं नैवं क्वचित् प्रोच्यते। तदेवं 'विद्वांसो देवाः' इति प्रत्याख्यातम्। विष्णुर्देवः, तस्य श्रीरामादयो-वतारा मनुष्याः। तत् किं वादिमतानुसारं विष्णुस्तु विद्वान्, परं श्रीरामकृष्णा-दयो मनुष्याः अविद्वांसः ? हंहो ! वादिनामशुद्धोयं पक्षः।

एवमेव 'सत्यसंहिता वै देवाः, अनृ संहिता वै मनुष्याः' 'ऐतरेय ब्रा० १।६ ) इत्याद्यपि व्याख्यातम्। अदसीयोऽयमाशयो यद्-देवाः सत्यभाषिणो भवन्ति, मनुष्याश्च असत्यभाषिणः, परमेतेन 'देव' शब्दस्तथा 'सत्यसंहितः' शब्दो 'वै' शब्देन मिथः पर्यायवाचकौ न भवतः; अन्यथा 'आयुर्वै घृतम्' कृष्णयजुर्वेद (तैत्तिरीय) संहिता २।३।२।२) इति आयुर्घृतयोरपि पर्यायता स्यात्, परं नैवमस्ति। एवमत्र 'देव' शब्दो विशेष्योऽस्ति, 'सत्यसंहिताः' इति च तदीयं विधेयविशेषणम्। महाराजसत्यहरिश्चन्द्रसदृशा अपि सत्यवादिनो मनुष्याः क्वापि 'देवा' न मताः। यदि सत्यवादित्वाद् वादिनो राजर्षिहरिश्चन्द्रं हरिश्चन्द्रं 'देवं' मन्यन्ताम्; तत् ते युधिष्ठिरं कंमंस्यन्ते। स सत्यवादी आसीत्; तेन च एकं प्रसिद्धमसत्यमपि भाषितम्। तत् किं तं वादिनो देवमनुष्ययोः सङ्करं मन्येरन् ? वस्तुतोऽसत्यं वदन्तोपि विष्ण्वादयो देवा एव, सत्यभाषिणोपि राजहरिश्चन्द्रादयो मनुष्या एव। वादिनामनुसारं ब्राह्मणकृते प्रयुक्तो 'मनुष्यदेव' (शत० ४।३।४) शब्दोपि 'सत्यासत्यवक्ता' इत्यर्थवान् स्यात्। यद्येवं ततो ब्राह्मणा देवा न सिद्धाः।

फलतो देवयोनिर्मनुष्ययोनितः स्वतन्त्रैव; यदीयोपासना वेदेषु प्रसिद्धा। वादिनामुचितमेतद् यत् -ते देवान्मन्यन्ताम्; तदेव तेषां कल्याणं स्यात्। वेदः स्वयमभिधत्ते—'न मर्डिता (सुखयिता) विद्यते अन्य एभ्यो देवेषु मे अधिकामा ऊधंसत (ऋ० सं० १०।६४।२) अत्र वेदेन देवाः सुखकारिणो मताः। प्रत्युताथर्ववेदेन त्वेतावदुक्तम्—'यः श्रद्धधाति—'सन्ति देवाः' इति, चतुष्पदे द्विपदेऽस्य मृड' (शौ० सं० १९।२।२८)। आदसीयोर्थ आर्यसमाजि-श्रीराजारामशास्त्रिणा इत्थं कृतः—'जो विश्वास रखता है कि देवता हैं -इसके दो पाये और चौपाये के लिए दयावान् हो' इति। तदेवं वैदिकम्मन्या वादिनः स्वगृहस्योन्नत्यर्थं देवतावादस्य मननं प्रारभन्ताम्। एतेन तदीया बह्वः शङ्का दूरेस्युः, बहुविधाश्च सुविधा वर्धेरन्। वेदमन्त्रार्थेषु तेषां काठिन्यं न तिष्ठेत्; शास्त्रान्तरेषु च प्रक्षिप्तताऽपदेशो न मन्तव्यः स्यात्। आशासे—'किं विद्वन्मनु-ष्याः सत्यवक्तारो वा देवाः ? इति प्रश्नस्य आस्माकीनोऽयं निबन्ध उत्तरमभूत्रो वा इति 'संस्कृतरत्नाकर' पाठकैः सम्यगूहितं भवेदिति शम्।

# ॥ दिल्लीनगरम्—किमासीत् स्थानस्यास्य प्राचीनं रूपम् ?

( अध्यापकश्रीनरेन्द्रनाथशर्मा चौधुरी, एम० ए०, शास्त्री, काव्य-व्याकरणतीर्थः )

सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ॥

इह खलु भारतवर्षे दिल्लीनगरम् अतीव प्रसिद्धमस्ति। इदं हि नगरं साम्राज्यलक्ष्म्याः प्रधानं लीलाक्षेत्रमिव वर्तते। नलिनीदलगतजलमिव अतितरला राजलक्ष्मीरिति नगरमेतत् सुतरां प्रतिपादयति। इदं तावन्नगरं बहूनां नरपतीनां, बहूनां राजवंशानाञ्च समुत्थानस्य पतनस्य च चिह्नजातं वक्षसि धारयति, प्रबलं कालविलासञ्च दर्शयति। खलु संस्थापितानां राजभवनानां ध्वंसावशेषात् जनानां मनसि सत्यमेतत् समुदेति यत् दिल्लीनगरं हि समृद्धानां साम्राज्यानां भयङ्करं महाश्मशानमिव वर्तते। दिल्लीनगरस्य प्राचीनं नामधेयम्—'इन्द्रप्रस्थम्' 'खाण्डवप्रस्थ'श्चासीत्। अस्य नगरस्य पुरातनमितिवृत्तं श्रीमहाभारतात्, श्रीकालिकापुराणाच्च विशेषेण ज्ञायते। तस्येतिवृत्तस्य वर्णनमत्र समासेन विधीयते। ऐतिहासिकमूल्यस्य तु निर्धारणं संक्षिप्तेऽस्मिन् निबन्धे न सम्भविष्यति। अन्यदा कदापि तद् विधास्यते।

अथ यथैतत् स्थानं सम्प्रति दृश्यते, न तथेदं पुराभूत्, तदात्र महद् वनमासीत्। तस्मिन् वने दैत्यानामेवाधिपत्यमभूत्, ततश्च लोकहितार्थं, विश्वशान्त्यर्थं च देवास्तद् वनं भस्मीभूतं कृत्वा, दैत्यान् तस्मात् स्थानाद् विताड़यामासुः। अत्र श्रीमहाभारतम्—

पुरा देवनियोगेन यत् त्वया भस्मसात् कृतम्।
आलयं देवशत्रूणां सुघोरं खाण्डवं वनम्॥
तत्र सर्वाणि सत्त्वानि निवसन्ति विभावसो।
तेषां त्वं मेदसा तृप्तः प्रकृतिस्थो भविष्यसि॥

(१—१२३, ७५, ७६)

ततश्च तस्मादेव कालात् तद् वनस्थलं भगवत इन्द्रस्याधीनं जातम्, इन्द्रराज्यस्याङ्गं भूत्वा 'इन्द्रप्रस्थम्' इति सुसङ्गतं नाम च प्राप्नोत्।

इत्येव दिल्लीनगरस्य 'इन्द्रप्रस्थम्' इति नाम्नः पुरातनमितिवृत्तमस्ति।

अथ गच्छति काले, तदिन्द्रप्रस्थं पुनरेव महद् वनं बभूव, चन्द्रवंशीयः कश्चिद् राजा सुदर्शनश्च तद् वनमेकदा सम्पूर्णं भग्नमकरोत्, महन्नगरं च तत्र स्थापयामास। इत्थं च तत्र स्थितं तद् घोरं वनं पुनरेव खण्डं खण्डं भूत्वा ननाश, वनखण्डनाच्च तस्य स्थानस्य 'खाण्डवप्रस्थ'मिति नामान्तरं च जातम्। खाण्डवप्रस्थस्य कर्ता राजा सुदर्शनस्तु महता प्रयत्नेन तन्नगरं समृद्धं समुन्नतञ्चाकरोत्। तथाचोक्तं कालिकापुराणे, एकोननवतितमेऽध्याये—

सोमवंशेऽभवद्राजा महात्मा स महाबलः।
धीरः सुदर्शनो नाम चारुरूपः प्रतापवान्॥

स वै हिमवतो नातिदूरे भङ्क्त्वा महावनम् ।
सिंहान् व्याघ्रान् समुत्सार्य क्वचिच्चापि तपोधनान् ॥
खाण्डवीं नाम नगरीमकरोत् तत्र शोभनाम् ।
त्रिंशद्योजनविस्तीर्णामायतां शतयोजनम् । इत्यादि।

परन्तु महाबलोऽपि नृपः सुदर्शनः खलु हठकारी, देव-मानवद्रोही च जातः । ततश्च वाराणसीपतेर्महाबलस्य नरपतेर्विजयस्य तस्योपरि महान् क्रोधो बभूव । अथ कदाचिद् राजा विजयः खलु किमपि छलं प्रदर्श्य, राज्ञः सुदर्शनस्य राज्यं खाण्डवप्रस्थं रुरोध, रणे सुदर्शनञ्च जघान । अथ हते तस्मिन् सुदर्शने, देवेन्द्रस्समागत्य नृपं विजयमुवाच—'भो राजन् ! पुरा स्थानेऽस्मिन् महद्वनमासीत् । तच्च वनमस्माकमानन्दमवर्धयत् परन्तु सुदर्शनेन ममाप्रियेण हठात् बलाच्च तत् सर्वं वनं भग्नं विधाय महद् राज्यमेकं स्थापितम् । मह्यं तु वनमेवात्र नितरां रोचते । अतोऽत्र पुनरेव महद्वनं जायताम् । तेन चाहं मम मित्रेण तक्षकेण सहात्र यथासुखं विहर्तुं समर्थो भविष्यामि ।' अथ राजा विजेता विजयः खलु देवेन्द्रस्य तद् वचनमाकर्ण्य, देवेन्द्रं प्रति गौरवात्, तत् स्थानं पुनर्वनमेव विधातुं मनो दधे । तदर्थं च स सर्वास्तत्रत्याः प्रजाः सम्बोध्य प्रोवाच—"भोः प्रजाः, यूयं युष्माकं पूर्वं स्थानं गच्छत, पुनर्येषामिच्छा स्यात् ते मम राजधानीं वाराणसीं गत्वा तत्रापि निवासं कर्तुं पारयेयुः । ततो राज्ञो विजयस्य तद् वचनं श्रुत्वा प्रजाः काश्चन पूर्वं स्थानं, काश्चन वाराणसीं जग्मुः । खाण्डवप्रस्थं च पुनरेव महद् वनं जातम् । तथा चोक्तं श्रीकालिकापुराणे, एकोननवतितमेऽध्याये—

असहिष्णुर्नरपतिर्विजयस्तं सुदर्शनम् ।
कृतापचारं बहुधा देवानाञ्च तथा नृणाम् ॥
विजयो विवरं प्राप्य महाबलपराक्रमः । सुदर्शनस्य नृपतेरवस्कन्दमथाकरोत् ॥
ततः सुदर्शनो राजा दारितो गदया पतन् । नष्टेषु तस्य सैन्येषु विजयः खाण्डवीं पुरीम्
प्रविश्य ददृशे तत्र राशिभूतान् गिरीनिव । सुवर्णानाञ्च रत्नानां सञ्चयान् बहुशः पुरः ।
तं वीक्षन्तं नरपतिं नगरीं तां सुरेश्वरः ।
समेत्य विजयं प्राह सान्त्वयन् श्लक्ष्णया गिरा ॥

इन्द्र उवाच—

राजन्, महद् वनमिदमासीद् देवगणावृतम् ।
नरगन्धर्वयक्षाणां मुनीनाञ्च मनोहरम् ॥
सर्वानुत्सार्य देवादीन् मम चैवाप्यप्रिये रतः ।
भङ्क्त्वा वनमिदं गुह्यं समुत्साद्य तपोधनान् ॥

खाण्डवीं नगरीं चक्रे हठाद् राजा सुदर्शनः।
तदिदं पुनरेव त्वं वनं कुरु नृपोत्तम।
तत्राहं विहरिष्यामि तक्षकेण समं रहः।
एतत् श्रुत्वा वचस्तस्य शक्रस्य विजयस्तदा।
वनमेवाकरोत् तां तु खाण्डवीं शक्रगौरवात्॥
त्रिंशद्योजनविस्तीर्णां शतयोजनमायताम्।
तां पुरीं विजयश्चक्रे न चिरादेव वै वनम्। इत्यादि॥

अथ पुनर्बहुतिथकालात् परं द्वापरे युगे, यदा धृतराष्ट्रपुत्राणां पाण्डुपुत्राणाञ्च मध्ये महद् वैमनस्यं जातं तदा राजा धृतराष्ट्रः शान्तिसंस्थापनार्थमुपायमेकमुद्भाव्य भ्रातुष्पुत्रान् पाण्डवानुवाच—"हे पाण्डवाः! अहं युष्मभ्यम् अर्धं राज्यं प्रयच्छामि। यूयमस्मात् स्थानात् गत्वा खाण्डवप्रस्थे नगरं स्थापयत, ससुखं च निवसत इति। पाण्डवाश्च तथा चक्रुः। तथाचोक्तं श्रीमहाभारते, आदिपर्वणि (१, २०७, २४-२६)—

'भ्रातृभिः सह कौन्तेय निबोध गदतो मम।
पुनर्नो विग्रहो मा भूत्, खाण्डवप्रस्थमाविश॥
प्रतिगृह्य तु तद् वाक्यं नृपं सर्वे प्रणम्य च।
प्रतस्थिरे ततो घोरं वनं तन्मनुजर्षभाः॥
अर्धं राज्यस्य सम्प्राप्य खाण्डप्रस्थमाविशन्।
ततः पुण्ये शिवे देशे शान्तिं कृत्वा महारथाः।
नगरं स्थापयामासुर्द्वैपायनपुरोगमाः॥ इत्यादि।

अथ तन्नगरं पुनः परिखाभिः प्राकारै रथ्याभि र्भवनैश्च समलङ्कृतं, तीक्ष्णाङ्कुश-शतघ्नीभिर्यन्त्रजालैश्च सुपरिरक्षितं बभूव। सर्वभाषाविदः, सर्वशिल्पविदश्च समागम्य तस्मिन् नगरे निवासं चक्रुः। अथैकदा राज्यविस्तारार्थं पाण्डुपुत्रोऽर्जुनः श्रीकृष्णस्य साहाय्येन खाण्डवं वनं दग्धुमारेभे, वनरक्षार्थं विमानयानेन समागतं, सगणं, स्वपितरमिन्द्रं महता, महावीरजनोचितेन च युद्धेन सन्तोष्य, पञ्चदशभिर्दिनैर्निखिलं तत् खाण्डवं वनं भस्मसादकरोत्, तत्रत्यान् असुरांश्च हत्वा जगतो हितं, राज्यस्य च विस्तारं विदधौ। तस्मिन् भयङ्करे खाण्डवदाहे नमुचेरसुरस्य भ्रातुः, शिल्पिनां वरस्य, शरणमागतस्य मयस्य प्राणा अर्जुनेन कृपया रक्षिता आसन्। दानववरो मयोऽपि प्रत्युपकारं कर्तुमिच्छुश्चतुर्दशाधिकैर्मासै रिन्द्रप्रस्थे पाण्डवानां कृते महतीमनुपमां सभामेकां चकार। अस्यामेव सभायां पाण्डवज्येष्ठो युधिष्ठिरो भ्रातृणां बाहुबलेन, भूमण्डलस्थान् सर्वान् नृपान् करदान् विधाय राजसूयं महायज्ञं चकार। इत्थमिन्द्रप्रस्थं

पुनः सुसमृद्धं सुप्रतिष्ठितं च नगरं जातम् । अथ द्यूतनिर्जितेषु वनं गतेषु पाण्डवेषु, इन्द्रप्रस्थस्य रमणीया दिव्या शोभापि शनैः शनैरस्तमगमत् । ततः कुरुक्षेत्र-महासमरात् परं जयश्रीसमुद्भासिताः खलु पाण्डवाः प्राचीनां, गङ्गातीरस्थितां कुरुराजधानीं हस्तिनापुरमेव समलञ्चक्रुः । इत्थं पुनर्यमुनातीरस्थमिन्द्रप्रस्थं क्रमेण साधारणमेव नगरमभूत् । अथ महाकालप्रभावात् नाशमुपगते यदुवंशे, स्वर्गं प्रति प्रस्थिते च भगवति श्रीकृष्णे, महादुःखदग्धा महाप्रस्थानाय कृत-निश्चयाः खलु पाण्डवाः, पौत्राय बालकाय परिक्षिते हस्तिनापुरं, श्रीकृष्णरूप पौत्राय बालकाय वज्राय च इन्द्रप्रस्थं ददुः । एतदेव प्राचीनेन्द्रप्रस्थस्य दुःखावहं महदितिवृत्तं वर्तते ।

अथ गच्छति काले खृस्तजन्मनः पूर्वमेव इन्द्रप्रस्थस्य दिल्लीति नामाभूत् । अत्र नूतने नाम्नि विदुषां बह्व्यो विप्रतिपत्तयः सन्ति तथाहि---केचनात्र कथयन्ति यत् खृस्तपूर्वप्रथमशतके समुत्पन्नस्य इन्द्रप्रस्थे राज्यं कुर्वतः कस्यापि बलवतो नूतन-नगर-निर्माण-प्रियस्य राज्ञो "दिलु" इति नामासीत् तदेव नाम दिल्लीतिनूतननाम्नः कारणमिति । अन्ये पुनराहुर्यदत्रत्यस्य प्रसिद्धस्य लौह स्तम्भस्य केनचन कारणेन कदाचिदुत्खननं पुनः प्रोथनञ्च जातम् । तेन च शिथिलत्वात् तस्य दिल्लीति भाषा—नाम्नो नगरस्यापि दिल्लीति नाम बभूव । अपरे त्वेवं भाषन्ते यत् यादवभेदानां 'जाट' इति प्रसिद्धानां 'धिल्लोन'-नामकानां जनानामिन्द्रप्रस्थे पुरा किल प्राचुर्येण निवासात् स्थानस्यास्य पूर्वं धिल्लीति यथार्थं नामाभूत् । तदनु च यवनशासनसमये यवनानां प्राचीनवर्णमालायां 'ध' शब्दस्याभावात् धिल्लीति नाम्नः क्रमेण दिल्लीति परिवर्तनं जातम् । अथाङ्गल-शासन-समये दिल्लीति शब्दस्य आङ्गलभाषायां डेल्हीति पुनः किञ्चित् रूपान्तरं संवृत्तम् । तदेव च नाम साम्प्रतमपि विद्वत्सु प्रचरति । अथ दिल्लीति नाम्नस्तत्त्वं यथा तथा वा भवतु, अस्य प्राचीनत्वं तु निर्विवादमेवास्ति । तथा च—पारसीक भाषायां "हनूज् दिल्ली दूर अस्त" 'अद्यापि दिल्ली दूरमस्ति' इत्याभाणको दिल्लीति नाम्नः सुतरां प्राचीनत्वं प्रतिपादयति ।

अथ मध्यकाले, केचनार्या राजानः खलु पुनरिन्द्रप्रस्थे दिल्लीसंज्ञके राजधानीमकुर्वन् । तेषु च राजसु,पृथ्वीराजस्य नाम सम्यगुल्लेखमर्हति । तदनु, कुरुक्षेत्रसमरभूमौ यवनेन महम्मदगोरिणा जिते पृथ्वीराजे,इन्द्रप्रस्थं हि क्रमेण बहूनां यवननृपाणां राजधानी बभूव । ततः परमाङ्गलराजैरत्र स्थापिता राजधानी । परन्तु सापि साम्प्रतं तेषां हस्तेभ्यः परिभ्रष्टा । अथ स्वतन्त्र-भारत-राज्यस्य दिल्लीति प्रसिद्धमिन्द्रप्रस्थमधुना राजधानी विद्यते । परन्तु प्राचीन-कालादेव इन्द्रप्रस्थं नितरामभिशप्तं स्थानमिव दृश्यते । इदं हि जीवानां महामारी, राज्यानाञ्च समाधिक्षेत्रमिव वर्तते । अतोऽत्र नूतन-भारत-राज्यस्य राजधानी चिरं माभूदिति बहूनां मतं वरीवर्ति । इतिहासदृष्ट्या ध्रुवं विचार्योऽयं विषयः ।

[ शेषः ३० पृष्ठे द्रष्टव्यः ]

(अष्टमपृष्ठस्य शेषांशः)

## वस्तु सच्चिदानन्दाद्वयं ब्रह्म

अवस्तु---अज्ञानादिसकलजडसमूहः

अज्ञानस्य द्वे शक्ती

| आवरण शक्तिः | विक्षेपशक्तिः |
|---|---|
| एतदवच्छिन्न आत्मा कर्ता, भोक्ता, सुखी, दुःखी, मूढः, | तमः प्रधानविक्षेपशक्तिमदज्ञानोपहित-चैतन्यात् अपञ्चीकृतानि-भूतानि उत्पद्यन्ते |

आकाशः वायुः अग्निः आपः पृथ्वी

पञ्चभ्यश्च सप्तदशावयवकं सूक्ष्मशरीरम्

| | | |
|---|---|---|
| आकाशादिगत-सात्त्विकांशेभ्यः | व्यस्तेभ्यः | ५ पञ्च ज्ञानेन्द्रियाणि |
| ,, | मिलितेभ्यः | ६ बुद्धिः (चित्तम्) सज्ञानेन्द्रियं-विज्ञानमयकोशः |
| आकाशादिगतर-जांशेभ्यः | व्यस्तेभ्यः | ७ मनः (अहंकारः) सज्ञानेन्द्रियं मनोमयकोशः |
| ,, | मिलितेभ्यः | १२ कर्मेन्द्रियाणि ५ |
| आकाशादिगतत-मोंशेभ्यः | मिलितेभ्यः | १७ प्राणादिवायुपञ्चकमुत्पद्यते सकर्मेन्द्रियं प्राणमयकोशः |

ततश्च पञ्चीकृतानि स्थूलभूतानि

| आकाशः | वायुः | अग्निः | आपः | पृथ्वी |
|---|---|---|---|---|
| आ. — वायुः अग्निः आपः पृथ्वी | वायुः — आका. अग्नि आपः पृथ्वी | अग्निः — आका. वायुः आपः पृथिवी | आपः — आका. वायुः अग्निः पृथ्वी | पृथ्वी — आका. वायुः अग्निः आपः |
| शब्दाभिव्यञ्जकः | शब्दस्पर्शाभिव्यञ्जकः | शब्दस्पर्शरूपाभिव्यञ्जनकः | शब्दस्पर्शरूपरसाभि० | शब्दस्पर्शरूपरसगन्धादिभि० |

पञ्चभ्यश्च पञ्चीकृतेभ्यः भूतेभ्यः

भूरादिचतुर्दशलोकानामुत्पत्तिः

[ २८ पृष्ठस्य शेषांशः ]

यथा तथा वा भवतु। इन्द्रप्रस्थस्येतिवृत्तन्न केवलं भारतवर्षस्य, अपि तु सर्वस्य जगतो बहु शिक्षणीयमस्ति। इन्द्रप्रस्थं खलु निखिलस्य विश्वस्य हितार्थं, मङ्गलार्थं, शान्त्यर्थं च सदा सतारं समुद्घोषयति—

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः।
कामः क्रोधस्तथा लोभस्तस्मादेतत् त्रयं त्यजेत्॥
( गीता–६,६,२६ )

इयमेव इन्द्रप्रस्थस्य, खाण्डवप्रस्थस्य, दिल्लीनगरस्य वा समासतो वार्ता, विभूतिः परिणति र्वाणीच। इति।

---

३२ पृष्ठस्य शेषांशः

## हार्दिको धन्यवादः

काशिकराजकीयसंस्कृतमहाविद्यालयस्य प्रधानाध्यापकसम्बन्धिनीं विज्ञप्तिमादाय संस्कृतसमाजे महान् क्षोभः कोलाहलोऽसन्तोषश्च समुत्पन्न आसीत्। अखिलभारतीयसंस्कृतसाहित्यसम्मेलनम्, काशी, श्रीकाशी विद्वत्परिषत् काशी, "संस्कृतम्" अयोध्या; संस्कृतप्रचारसमितिः आजमगढ़-प्रभृतयोऽनेकाः संस्थाः पत्राणि च एतद्विषये घोरं विरोधं प्रदर्शितवन्ति। फलतः माननीयश्रीशिक्षामंत्रिमहोदया एम० ए० पदवीकत्वस्यावश्यकतामनिवार्यताञ्च निस्सार्य नवीनं परिशोधनं कृतवन्तः। यद्यपि अधुनापि आग्लज्ञानां प्राथमिकताप्रदानेन संस्कृतसमाजः क्षुब्ध एव तथापि व्यवहारे कश्चिद् योग्यतमोऽपि विद्वानतज्ज्ञत्वादुपेक्षितो न भविष्यति इति विश्वसिमि। अतः माननीयाः उत्तरप्रदेशीयशिक्षासचिव महोदयाः हार्दिकधन्यवादसमर्पणेनाभिनन्द्यन्ते।

## 'संस्कृतसाकेतः'

पुण्यपुरीश्रीमदयोध्यातः विजयादशमीमहोत्सवतः 'संस्कृतसाकेतः' नाम संस्कृतसाप्ताहिकं पत्रं प्रकाशयिष्यते इति अयोध्यास्थाखिलभारतीय-विद्वत्समितिसंस्थायाः निश्चयमभिनन्दामः कामयामहे च तत्साफल्याय लोकाभिरामं श्रीराममिति।

# विश्वसंस्कृतपरिषद्—

माननीयश्रीकन्हैयालालमुंशीमहोदयानां तत्त्वावधाने श्रीसोमनाथ-प्रतिष्ठावसरे एका "विश्वसंस्कृतपरिषद्" संस्थापिता। यस्या उद्देश्यादिकमपि श्रीमुंशीमहोदयैः सम्प्रति प्रकाशितम्। एतद्धि खेदास्पदं यत् तस्याः संस्थायाः निखिलं पत्रादिव्यवहारः आंग्लभाषायामेव भवति। कस्या अपि संस्कृत-संस्थायाः कार्यालयव्यवहारभाषया संस्कृतेनैव भाव्यम्। एतद्धि संस्कृतज्ञाना-मौदासीन्यं यत् संस्कृतबलिमपि इतरे आंग्लज्ञा एव भुञ्जते। अखिलभारतीय-संस्कृतसाहित्यसम्मेलनमचिरादेव एकं विशेषाधिवेशनमायोक्ष्यते यत्र विश्व-व्यापिने संस्कृतज्ञसंघटनाय योजनाः विनिर्मास्यन्ते ताश्च कार्यरूपेण परिणमयितुं विचारयिष्यन्ते। एतत्सत्कार्यप्रेरणाय—माननीयश्रीमुंशीमहोदयाः धन्य-वादार्हा एव।

## भारतीयसंस्कृताध्ययनपरिषद्.

१९५० खिस्ताब्दीयमईमासस्य प्रथमतिथौ माननीयश्रीसम्पूर्णानन्द महोदयानां संयोजकत्वे एकम् अखिलभारतीयप्राच्यविद्यासम्मेलनम् काश्याम् आयोजितम्। यस्याः परिषत्पतित्वं श्रीआचार्यनरेन्द्रदेवमहोदया अकुर्वन्। तत्र च प्रधानतो निखिलानां भारतीयानां संस्कृतपरीक्षाणां समानतायै विचारः कृतः। तस्यामेव परिषदि "भारतीयसंस्कृताध्ययनपरिषद्" इति नाम्नो संस्था निर्मिता यस्याः प्रधानकार्यालयः लखनऊनगरे वर्तते। मन्त्रिणश्च तस्याः ( बी० एन० झा० वी० एस० सी० संयुक्तमंत्री, शासन, उत्तर प्रदेश ) महोदया वर्तन्ते।

अत्र च निम्नलिखिता सदस्याः ग्रहीष्यन्ते।

१ विश्वविद्यालयप्रतिनिधयः
२ भारतीयसंघराज्यप्रतिनिधिः
३ प्रान्तीयराज्यप्रतिनिधयः
४ राजस्वीकृतसंस्कृतसंस्थाप्रतिनिधयः
५ अखिलभारतीयप्राच्यविद्यासम्मेलनप्रतिनिधिश्च। एतत्परिषदः पतिश्च भारतीयसंघशासनेन गृहीतनामा भविष्यति।

## द्वयमत्र निवेदनीयम्—

१. यथा अत्र अखिलभारतीयप्राच्यविद्यासम्मेलनस्य एकः प्रतिनिधिर्गृह्यते तथा अखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्यापि एकः प्रतिनिधिरवश्यं ग्रहीतव्यः।
२. एतत्परिषत्पतिश्च नैव संघराजशासनगृहीतनामा स्यात् अपि तु सर्वैः प्रतिनिधिसदस्यैरेव निर्वाचितः सदस्यान्तर्गतस्तद्बहिर्भूतो वा जनो निर्वाच्यः।

आशासे मन्त्रिमहोदया अत्र दत्तावधाना भविष्यन्ति।

## राजस्थानसंस्कृतसाहित्यसम्मेलनम् ।

श्रीविद्याधरशास्त्रिमहोदयाः रा० सं० सा० सम्मेलनकार्यवाहकाः विज्ञापयन्ति यत्—

सम्मेलनस्य तृतीयं वार्षिकमधिवेशनम् योधपुरनगरे भविष्यति इति रा० सं० सा० सम्मेलन-कार्यकारिणीनिश्चयः । एवं सर्वैः राजस्थानीयैः सम्मेलनसाफल्याय स्वस्वाभिमतविचाराः सम्मेलनकार्यालये सम्प्रेष्याः ।

## संस्कृतपाठ्यक्रमः

जानन्त्येव संस्कृतज्ञा यत् अखिलभारतीयसंस्कृतसाहित्यसम्मेलनम् स्वजन्मनः प्रभृत्येव संस्कृताध्ययनपरिपाटीपरिष्कारायान्दोलनं करोति । इदमस्ति हर्षास्पदं यत् उत्तरप्रदेशीयशासनेन संस्कृतशिक्षाक्रमे क्रान्तिकारि परिवर्तनं कृतम् । संस्कृतस्य प्रधाने शिक्षाकेन्द्रे जयपुरेऽपि परिशोधितोऽभिनवः पाठ्यक्रमो निर्धारितो विद्यते । परमेतद् द्वयमेव न्यूनाधिकादिदोषसंवलितमपरिपूर्णमिति विशिष्टविदुषां सुनिश्चितं मतम् । अतएव सं० सा० सम्मेलनेन एका पाठ्यनिर्धारिणी समितिरायोजि, यस्याः सदस्यानां पार्श्वे उक्तद्वयपाठ्यक्रमसहितः सम्मेलनप्रस्तावः प्रेषितः । यदत्र कुत्रानुचितम् कुत्र वा संशोधनमपेक्षितं भवत्सम्मतौ इति । आशासेऽचिरादेव सम्मेलनं स्वीयं सुनिर्धारितं मतं प्रकाशयिष्यति । एतत्सूचना च काशिकराजकीयसंस्कृत पाठ्यनिर्धारण समितिसदस्येषु सम्मेलनेन दत्ता ।

## अविवेकस्य माहात्म्यम्

मरणलक्षणम्—जानन्ति हि समाचारपाठकाः सामाजिकाः यत् प्रतिवर्षं भारतस्य कस्मिंश्चित्प्रसिद्धे नगरे 'प्राच्यविद्यासम्मेलनम्" ( ओरियन्टल-कान्फ्रेंस" भवति । तत्र च प्राच्यविद्यामधिकृत्य बहवः प्रस्तावाः महत्त्वपूर्णा निर्णयाश्च विधीयन्ते । परमेषनैव शोकस्य, क्षोभस्य वा अपि तु लज्जायाश्चापि विषयः यत्तत्र न कोपि प्राच्यविद्याविशारदः प्राच्यविद्यासंस्थाप्रतिनिधिः विशिष्टः प्राच्यविद्वान् वा भवति किन्तु, कतिपये आंग्लज्ञा एव समवेत्य तत्र विचारयन्ति निर्णयन्ति च । नैव तेषां दोषो यत्ते नःस्मान् आह्वयन्ति। ते तु धन्यवादार्हा एव यतस्ते एतद्विद्याविषयेऽपि किंचित्कुर्वन्ति । एतद्धि अस्माकमौदासीन्यं जीवन विरक्तिरकर्मण्यता च, यत् न वयं स्वविषये किञ्चिच्चिन्तयामः न वा किञ्चित्कुर्मः अपि तु अन्य एव साहसिकाः पटवः अस्मदीयबलिभागमपि भुञ्जते ।

अस्मिन् वर्षे लखनऊनगरे तत्सम्मेलनं अक्टूबरमासस्य २-३-४-५ तिथिषु भावि । संस्कृतसाहित्यसम्मेलनं स्वागतसमितेरध्यक्षान् श्रीआचार्य-नरेन्द्रदेव महोदयान् तत्समितिसचिवांश्च साग्रहमनुरुणद्धि यत् अस्मिन् वर्षे अखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्य विशिष्टाः प्रतिनिधयः अन्यासां संस्कृतविशिष्टसंस्थानां प्रतिनिधयश्चावश्यं निमन्त्रणीयाः ।

[ शेषः ३० पृष्ठान्ते द्रष्टव्यम् ]

# संस्कृतरत्नाकरस्य नियमाः ।

१. पत्रमिदमखिलभारतीय संस्कृतसाहित्यसम्मेलनस्य मुखपत्ररूपेण प्रतिचान्द्रमासे अन्तिमे सप्ताहे प्रकाश्यते । यैर्ग्राहकैरागामिचान्द्रमासस्य पञ्चदशदिवसं यावत् पत्रं न लभ्येत तैस्तस्मिन् मास एव स्वकीयप्रेष्यकार्यालये ( पोष्ट आफिस में ) अन्वेषणानन्तरं रत्नाकरकार्यालये पत्रं संप्रेष्य कारणं मृग्यम् । मासान्तरे कस्यापि अभियोगो नावधेयः स्यात् ।

२. संस्कृतसाहित्यसम्मेलनस्य संरक्षकेभ्यः सहायकेभ्यः विशिष्टसदस्येभ्यः साधारण सदस्येभ्यश्च पत्रमिदं विना मूल्येन वितीर्यते ।

३. ये प्रत्यब्दं दशरूप्यकेभ्योऽनल्पं साहाय्यं विदधीरन् तेऽस्य पत्रस्य सहायका मन्येरन्, नामानि च तेषां सहायकरूपेण पत्रे प्रकाश्येरन् ।

४. ग्राहकैः पत्रव्यवहारे स्वीया ग्राहकसंख्याऽवश्यं लेख्या, अन्यथोत्तरप्राप्तौ विलम्बो जायेत । परिवर्तनपत्राणां, निबन्धानाञ्च प्रेषणम्, निखिलः पत्रव्यवहारश्च "व्यवस्थापकः, संस्कृतरत्नाकरकार्यालयः, भद्रवनी, काशी, इति संकेतेन विधेयः" ।

## प्रचारकाणां कृते सौविध्यम्

संस्कृतरत्नाकरस्य प्रचाराय सर्वत्र प्रचारका अपेक्ष्यन्ते । ते च रत्नाकरशुल्कचतुर्थांशार्धभागिनो भवेयुः ।

ते चात्र द्विविधाः सम्मताः—१—प्रकीर्णवितरकाः
२—स्थायिग्राहकनिर्मातारः,

### प्रथमानां कृते नियमाः—

१. प्रचारकः यावतोऽङ्कान् ग्रहीतुमिच्छति, प्रत्यङ्कं सप्ताणकान् अग्रिमप्रतिभूरूपान् धनादेशद्वारा संप्रेषयेत् । एतच्च अग्रिमं धनं प्रचारकत्वविरामदशायां परावृत्तं भविष्यति ।

२. प्रतिमासं पूर्णिमातः सप्ताहपूर्वं गृहीताङ्कमूल्यं धनादेशद्वारा व्यवस्थापकसकाशं प्रेषयेत् । मूल्ये प्राप्त एव अपरमासस्याङ्कः प्रेषितो भवेत् ।

## द्वितीयानां कृते—

चत्वारिंशद् रूप्यकाणां विंशतिरूप्यकाणां वा, धनादेशप्रेषणेन एका दशपत्रमिता वार्षिकी षाण्मासिकी वा शुल्कप्राप्तिसूचिका ( रसीद बुक ) ग्राह्या। प्रतिमासं पूर्णिमापूर्वसप्ताहे निर्मितग्राहकाणां संकेतसहितानि नामानि चतुर्थांशवर्जितं शुल्कञ्च व्यवस्थापकसविधे प्रेष्यम्। येन यथासमयं ग्राहकेभ्योऽङ्काः प्रहिता भवेयुः।

एवं किञ्चिदर्थलाभेन सह प्रचारकाः स्वजननीं सुरसरस्वतीं सेविष्यन्ते।

## पाठकान्प्रति—

विगतेऽङ्के अनिषेधकान् पाठकान् "रत्नाकरः" वी० पी० द्वारा 'प्रेषयिष्यते' इति विज्ञापितमासीत् ततः कृपापरैर्बहुभिर्ग्राहकैर्धनादेशद्वारा मूल्यप्रेषणेन अनुगृहीतोस्मि। पञ्चषैश्च निषिद्धमपि। अतो वी० पी० नैव प्रेष्यते। आशास्यते शिष्टा ग्राहका अपि शीघ्रम्मूल्यसमर्पणेनानुग्रहीष्यन्ति—

इति—

व्यवस्थापकः

श्री विक्रम पञ्चाङ्ग प्रेस, भदैनी, बनारस।

पढ़ था।

'ठीक है।' रामसिंह को तीदेख हुई वह हरी के कमरे की ओर बढ़ गाई।

हरी समाचार पत्र पढ़ रहा था।

'हरी बेटा।' पुकारा मां ने।

'हाँ, माँ आओ न।' हरी ने देखा माँ उदास है, 'माँ, आज तुम उदास क्यों हो?'

'मैं उदास नहीं हूँ बेटा।' मुस्कराने का असफल प्रयास किया उन्होंने 'बेटा हरी आज मैं एक बात पूछना चाहती हूं।'

हँसा हरी, 'अरे वाह माँ, आज तुम्हें हो क्या गया है? भला वह कौन सी बात है जिसे पूछने के लिए माँ, पुत्र से आज्ञा ले।'

'हरी जब तू छोटा था...।' रुक गयीं वह।

'हाँ—बोलो माँ, चुप क्यों हो गई।'

'जब तू छोटा था तो तेरी मंगनी कृपाल सिंह ने अपनी बेटी 'चन्दा' से किया था।'

'तो क्या हो गया माँ?' हरी गम्भीर हो गया।

'मैं चाहती हूँ अब 'चन्दा' की शादी तेरे साथ कर दी जाये।'

'नहीं...नहीं...माँ...ऐसा न करना।' आहत स्वर में बोला—चन्दा पढ़ी-लिखी समझदार है। भगवानने उसे रूप, गुण सभी दिया है, उसकी शादी मेरे साथ करके उसके जीवन को नष्ट करने की बात सोचो माँ।'

'माँ का गला रुंध गया, 'बेटा स्पष्ट उत्तर चाहती हूं।

'मैं स्वयं ही बेसहारा हूँ तो भला दूसरे को क्या सहारा दूंगा।' दर्द में डूबा स्वर था हरी का, 'अब

कहानी—

# जन्म-जन्म

(चीत...

जाए..।'

'तू मुझे मारेगा तो मैं तेरी टांग ही तोड़ दूँगी।'

'है हिम्मत तो ले आ गया।' हरी पास आ गया 'चंदा' के।

'अच्छा तो ले...।' चन्दा ने हरीकी बाँह दाँतों तले दबा ली।

'उफ।' दर्द से कराह उठा हरी।

'बोल...अ...ब...।' दाँत गड़ा कर बोली चन्दा।

'तड़।' एक चपत रख दिया हरी ने चन्दा के गाल पर।

'ओह...ऊं...ऊं...।' रो पड़ी 'चन्दा'।

चन्दा के रोने का स्वर सुन 'हरी की माँ' आ गई। आते ही पूछा उन्होंने 'चन्दा बेटी क्यों रो रही हो?'

रोती हुई बोली चन्दा 'हरी ने मारा है।

माँ ने हरी को घूर कर देखा, 'बोल क्यों मारा चन्दा को?'

जल्दी से बोला हरी, 'पहले इसने मुझे दाँत काटा...।'

तड़-तड़! दो तमाचे पड़े हरी के दोनों गाल पर 'बोल फिर मारेगा चन्दा को?'

'...!' हरी रोने लगा।

'लाज नहीं आती घर आये मेहमान को मारते हुये? बोल फिर मारेगा चन्दा को...नहीं बोलेगा? माँ ने मारना चाहा पर चन्दा आंख

'हरी पास आ गया' दे... अच्छे बच्चे कभी लड़ाई नहीं... चन्दा बेटी चलो हरीसे माँफी...

'मैं मांफी मागूंगी, ... मिल्ली करेगा न?' पूछा च...

'हाँ...हाँ...पहले तू ... मांग।' कृपालसिंह ने कहा...

चन्दा हरी के पास... बोली, 'मुझे माँफ कर दो ह...

हरी मन ही मन ... पर मुस्काया।

'अच्छा बेटी अब ह... जाओ खेलो।' बोले कृपा...

चन्दा हरी का हाथ प... चली गयी।

हरी ने सोचा जान ब... पाये।

दोनों के बाहर जाते ह... मित्र भी हंस पड़े।

कृपाल सिंह ने मुस्क... कहा, 'राम तुम्हारे पास को... नहीं और न मेरे पास लड़क...

राम सिंह बोले,'तब?'

कृपाल सिंह ने कहा,'मैं... हूँ तुम हरी को मुझे दे दो... चन्दा को ले लो हम... मित्रता अमर हो जायेगी।'

'मुझे स्वीकार है मि... सहर्ष, चन्दा मेरी और ह...